

श्री शेषाचल साधुमहाराज आनंदवनअगाडि.

# शुद्धिपत्र.

| संख्या | पंक्तिः | अशुद्धाक्षराणि | शुद्धाक्षराणि | संख्या | पंक्तिः | अशुद्धाक्षराणि | शुद्धाक्षराणि |
|---|---|---|---|---|---|---|---|
| २ | १८ | स्यंवधूतं | स्यत्रंधूतं | १९ | १२ | ब्रेधो | व्रेधो |
| २ | १९ | त्वादित्या | त्वादित्या | २० | ६ | त्रेष्णवान् | वैष्णवान् |
| ३ | ३ | सिवे | सिवे | २२ | १६ | स्पूनु | स्सूनु |
| ५ | ७ | सदनृतस्य | सदन्नृतस्य | २२ | १८ | हविः | हविः |
| ६ | १२ | तुर्यज्ञ | तर्यज्ञ | २४ | १७ | स्था॥त्रि | स्थात्रि |
| ६ | १६ | पोहामि | पौहामि | २७ | १० | रंस्याम | रंस्स्याम |
| ६ | १८ | जस्यै | जस्यै | २७ | १६ | द्रवन्त | द्रवन्ता |
| ७ | ८ | यक्त | यत्क | ३५ | ९ | भुवस्व | भुवस्स्व |
| ९ | ९ | भुवस्व | भुवस्स्व | ४० | २० | जभ्रिरे | जभ्रिरे |
| १० | ७ | यानि | योनि | ४१ | ८ | यंयज्ञे | यंज्ञे |
| १२ | ३ | षुणः | षुनः | ४१ | १० | प्रजा | प्रजा |
| १८ | ९ | अपार्वधी | अपावधी | ४१ | १० | वोअ | वोअ |

| | | | |
|---|---|---|---|
| ४१ | १९ | आदित्यं | आदित्यं |
| ४२ | ८ | षल्टतून् | षकृतून् |
| ४३ | १० | रक्ष | रक्ष |
| ४४ | १९ | बृहस्पतये | बृहस्पतये |
| ४६ | ३ | ब्राह्मणानाँ | ब्राह्मणानाँ |
| ४६ | ६ | विश्रा | विश्वा |
| ४७ | ११ | नाश्शु | नाशु |
| ४७ | १२ | वधुः | वधुः |
| ४८ | ७ | शृण्वन्तु | शृण्वन्तु |
| ५० | १५ | वृत | व्रत |
| ५० | १५ | महाँअ | महाँअ |
| ५१ | ४ | स्यत्कून् | स्यक्तून् |
| ५५ | १८ | भृशात् | भ्रशात् |
| ५७ | ५ | नरर्क्षषिभिः | नरक्षबिभिः |
| ५७ | १६ | अस्यौ | अस्यो |
| ५८ | २० | इद्रा | इन्द्रा |
| ५९ | १ | प्रश्न | पृश्न |
| ५९ | ५ | वृता | व्रता |
| ६० | १२ | कृत्वो | क्रत्वो |
| ६० | १६ | इक्तिला | इत्किला |
| ६१ | २ | याक्तिश्च | यत्किश्च |
| ६१ | ४ | बादध्व | बाधध्व |
| ६१ | १२ | ह्रदे | हृदे |
| ६५ | ९ | सहमाना | सहमाना |
| ६७ | १२ | गृच्छतु | गृच्छतु |
| ६८ | ११ | छा | शा |
| ७० | १३ | हुतं | हतं |
| ७६ | २ | स्वगे | स्वर्गे |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ७६ | ९ | पुनिक | पुञ्जिक | १२८ | १२ | होव्यैं | होव्यैं |
| ७८ | १८ | अर्वाङ्स्व | अर्वाङ्क्स्व | १२९ | १२ | हान्त्यां | हान्त्या |
| ७९ | १४ | नयस्स्व | नयस्व | १३० | १९ | माम्रौ | मम्रौ |
| ७९ | १७ | ज्येष्ठ्या | ज्यैष्ठ्या | १३४ | ७ | वेशा | वेश३ |
| ८३ | १ | गृहि | ग्रहि | १३८ | १६ | श्शंकाते | शकाते |
| ८४ | १० | इरण्या | इरिण्या | १४० | १० | मृक्षगाभिः | मृक्षलाभिः |
| ८४ | ११ | वृज्या | व्रज्या | १४१ | ९ | हृदा | हृदा |
| ८८ | १६ | मुंत्रना | मुत्रंना | १४१ | १८ | यस्यच्छाया | यस्यच्छाया |
| ९१ | ११ | अकः | अकः | १४२ | १२ | श्रुणुयाम | शृणुयाम |
| १११ | ११ | चतुदश | चतुर्दश | १४३ | ६ | चपाळं | चपालं |
| ११२ | २ | यक्ष्य | यक्ष्य | १४६ | ९ | न्द्रः | द्र |
| ११५ | १४ | वलं | व्रलं | १४६ | १८ | मन्ने | मन्ने |
| ११६ | १६ | याहि | यांहि | १४७ | ५ | दथ | दध |
| ११८ | ८ | इद्रियं | इन्द्रियं | १५० | १४ | वरवृषभ | वरंवृषभ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १५१ | २० | शिक्षितो | शिक्षितौ | १७३ | १३ | येऽपी | येपी |
| १५२ | २ | नराशꣳस | नराशꣳस | १७६ | १५ | म्यसौ | म्यसौ |
| १६१ | १७ | पाथ | पार्थ | १७६ | १९ | भवतु | भवन्तु |
| १६३ | १ | नागा | नागा | १७९ | १ | दूते | धूते |
| १६३ | ७ | थुस्व | थुस्व | १७९ | २ | दूते | धूते |
| १६८ | ११ | पदज्ञा | पदज्ञा | १८३ | २ | बर्हिभ्यो | बर्हिभ्यों |
| १६८ | १९ | ओषधी | ओषधी | १८६ | ८ | मर्शत् | मर्षत् |
| १६९ | ११ | रश्विना | रश्विना | १८७ | ३ | कर्षे | कक्षे |
| १७३ | ११ | कारीं | कारिं | १७६ | १० | ते | ते |



श्रीगणेशाय नमः॥ श्रीयाज्ञवल्क्यगुरुभ्योनमः॥हरिः ॐ॥इषेत्त्वोर्जेत्त्वावाय
वस्स्थ। देवोवस्सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे॥१॥ आप्यायध्वमघ्न्याइन्द्राय
भागम्प्रजावतीरनमीवाअयक्ष्माः॥मावस्तेनईशतमाघशंसः॥२॥ध्रुवाअस्मिन्गो
पतौस्यातबह्वीः॥ यजमानस्य पशून्पाहि वसोःपवित्रमसि ॥३॥ १

द्यौरसिपृथिव्यसिमातरिश्वनोघर्मोऽसि॥विश्वधाःपरमेणधाम्ना॥१॥दृꣳहस्वमाह्वा
र्मातेयज्ञपतिर्ह्वार्षीत् ॥ वसोःपवित्रमसिशतधारंवसोःपवित्रमसि सहस्रधारम्॥२
देवस्त्वा सवितापुनातुवसोःपवित्रेण शतधारेण॥ सुप्वाकामधुक्षः॥३॥ साविश्वा
युस्साविश्वकर्मा साविश्वधायाः॥ इन्द्रस्यत्वाभागꣳसोमेनातनच्मिविष्णोहव्यꣳ
रक्षस्व॥४॥ २

अग्नेव्रतपतेव्रतञ्चरिष्यामितच्छकेयन्तन्मेराध्यताम्॥इदमहमनृतात्सत्यमुपैमि॥१

कस्त्वायुनक्तिसत्वायुनक्तिकस्मैत्वायुनक्तितस्मैत्वायुनक्ति॥कर्मणेवांवेषायवाम्॥२॥
प्रत्युष्टꣳरक्षःप्रत्युष्टाअरातयोनिष्टप्तꣳरक्षोनिष्टप्ताअरातयः॥ उर्वन्तरिक्षमन्वेमि ॥३॥
धूरसिधूर्वधूर्वन्तन्धूर्वतंय्योऽस्मान्धूर्वति॥धूर्वतंयंवयन्धूर्वामः ॥४॥ देवानामसिस
स्नितमँवह्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ अह्रुतमसिहविर्धानन्दृꣳहस्वमा
ह्वामातेयज्ञपतिर्ह्वार्षीत्॥५॥विष्णुस्त्वाक्रमतामुरुवातायापहतꣳरक्षोयच्छन्तांपञ्च।
देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥६॥ अग्नयेजुष्टङ्गृह्णा
म्यग्नीषोमाभ्याञ्जुष्टङ्गृह्णामि ॥ भूतायत्वानारातयेस्वरभिविरव्येषम् ॥७॥ दृꣳह
न्तान्दुर्याःपृथिव्यामुर्वन्तरिक्षमन्वेमि॥पृथिव्यास्त्वानाभौसादयाम्यदित्याउपस्थे॥
अग्नेहव्यꣳरक्षस्व ॥ ८ ॥ २

पवित्रेस्थोवैष्णव्यौसवितुर्वःप्रसवउत्पुनामि॥अच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः।१।

देवीरापोअग्रेगुवोअग्रेपुवः ॥ अग्रइममद्ययज्ञन्नयनमुधानुँय्यज्ञपतिन्देवायुवंम ।२।
युष्माइन्द्रोऽवृणीतवृत्रतूर्य्येयूयमिन्द्रमवृणीध्वँवृत्रतूर्य्येप्रोक्षिताम्स्थ॥ अग्नयेत्वाजुष्टम्
प्रोक्षाम्यग्नीषोमाभ्यान्त्वाजुष्टम्प्रोक्षामि॥३॥ दैव्यायकर्मणेशुन्धध्वन्देवयज्यायै ॥
यद्वोऽशुद्धः पराजघानेतद्वस्तच्छुन्धामि ॥ ४ ॥ ४
शर्मास्यवधूत ँरक्षोऽवधूताअरातयः॥अदित्यास्त्वगसिप्रतित्वादितिर्वेत्तु ॥ १ ॥
अद्रिरसिवानस्पत्योग्रावासिपृथुबुध्नः ॥ प्रतित्वादित्यास्त्वग्वेत्तु ॥ २ ॥ अग्नेस्त
नूरसिवाचोविसर्जनम् ॥ देववीतयेत्वागृह्णामि ॥ ३ ॥ बृहद्ग्रावासिवानस्पत्य
स्सइदन्देवेभ्यः॥ हव्य ँशमीष्वसुशमिशमीष्वहविष्कृदेहि ॥४॥ कुक्कुटोऽसिमधु
जिह्वइषमूर्जमावद ॥ वय ँसङ्घातेसङ्घातेजेष्म ॥ ५ ॥ वर्षवृद्धमसिप्रतित्वावर्ष
वृद्धवेत्तु॥ परापूत ँरक्षःपरापूताअरातयः ॥ ६ ॥ अपहत ँरक्षोवायुर्वोविविन

क्तु ॥ देवोवस्सविताप्रतिगृह्णातुहिरण्यपाणिरच्छिद्रेणपाणिना ॥ ७ ॥ ५

धृष्टिरस्यपाग्नेअग्निमामादञ्जहि ॥ निष्क्रव्याद ँ सेधादेवयजँवह ॥१॥ ध्रुवमसि
पृथिवीन्दृ ँ ह ॥ ब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामिद्विषतोवधाय ॥२॥ अग्नेब्रह्म
गृभ्णीष्वधरुणमस्यन्तरिक्षन्दृ ँ ह ॥ ब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामिद्विषतो
वधाय ॥ धर्त्रमसिदिवन्दृ ँ ह ॥ ब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामिद्विषतो
वधाय ॥ ३ ॥ विश्वाभ्यस्त्वाशाभ्यउपदधामिद्विषतोवधाय ॥ चितस्स्थोर्ध्वचितो
भृगूणामङ्गिरसान्तपसातप्यध्वम् ॥४॥ ६

शर्मास्यवधूत ँ रक्षोऽवधूताअरातयः ॥ अदित्यास्त्वगसिप्रतित्वादितिर्वेत्तु ॥१॥
धिषणासिपर्वतीप्रतित्वादित्यास्त्वग्वेत्तु ॥ दिवस्स्कम्भनीरसिधिषणासिपार्वतेयीप्रति
त्वापर्वतीवेत्तु २ धान्यमसिधिनुहिदेवान्धिनुहियज्ञन्धिनुहियज्ञपतिम् ॥ धिनुहिमाँयज्ञ

न्यसु॥३॥ प्राणाय त्वोदानाय त्वा व्यानाय त्वा। दीर्घामनुप्रसितिमायुषे धान्देवो वस्स
विताप्रतिगृह्णातु हिरण्यपाणिरच्छिद्रेण पाणिना ॥ चक्षुषे त्वा महीनाम्पयोऽसि ।४।
वेदोऽसि येन त्वन्देव वेद देवेभ्यो वेदोऽभवः ॥ तेन मह्यं वेदो भव ॥ ५ ॥ ७
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ सँ वपामि समाप ओष
धीभिस्समोषधयो रसेन ॥ सꣳरेवतीर्जगतीभिस्सम्मधुमतीर्मधुमतीभिः पृच्यन्ताम् ।
जनयत्यै त्वा सँयौमि ॥१॥ इदमग्नेरिदमग्नीषोमयोरिषे त्वा ॥ घर्मोऽसि विश्वायुरुरुप्र
था उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् ॥२॥ अग्निष्टे त्वचम्मा हिꣳसीद्देवस्त्वा सवितारिꣳरक्षोऽन्त
रिता अरातयः ॥ देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ॥३॥ माभेर्मा सँविक्था अ—
तमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात् ॥ त्रिताय त्वा द्विताय त्वैकताय त्वा ॥४॥ ८
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ आददेऽध्वरकृतन्देवे

भ्यः ॥ इन्द्रस्यबाहुरसिदक्षिणस्सहस्रभृष्टिश्शततेजाः॥वायुरसितिग्मतेजाद्विषतोव
धः।१।पृथिव्यैवर्मासिपृथिविदेवयजनि॥ओषध्यास्तेमूलम्माहिꣳसिषम्।२।व्रजङ्गच्छ
गोष्ठानँवर्षतुतेद्यौर्बधानदेवसवितःपरमस्याम्पृथिव्याꣳशतेनपाशैः।योऽस्मान्द्वेष्टिय
ञ्चवयन्द्विष्मस्तमतोमामौक्।३।अपाररुँवध्यासम्पृथिव्यैदेवयजनात्।व्रजङ्गच्छगो
ष्ठानंवर्षतुतेद्यौर्बधानदेवसवितःपरमस्याम्पृथिव्याꣳशतेनपाशैः।योऽस्मान्द्वेष्टियञ्च
वयन्द्विष्मस्तमतोमामौक्।अररोदिवम्मापप्तोद्रप्सस्तेद्याम्मास्कन्॥व्रजङ्गच्छगोष्ठानं
वर्षतुतेद्यौर्बधानदेवसवितःपरमस्याम्पृथिव्याꣳशतेनपाशैः॥योऽस्मान्द्वेष्टियञ्चवय
न्द्विष्मस्तमतोमामौक्॥४॥ गायत्रेणत्वाच्छन्दसापरिगृह्णामित्रैष्टुभेनत्वाच्छन्दसा
परिगृह्णामिजागतेनत्वाच्छन्दसापरिगृह्णामि।सुक्ष्माचासि।शिवाचासिस्योनाचासि
सुषदाचासि।ऊर्जस्वतीचासिपयस्वतीच।५।पुराक्रूरस्यविसृपोविरप्शिन्नुदादायपृथि

वीञ्जीवदानुम्।यामैरय॑श्चन्द्रमसिस्वधाभिस्तान्धीरासोअनुदिश्ययजन्ते। क्षिपतोद्म
भोऽसि६।१।प्रत्युष्टꣳरक्षःप्रत्युष्टाअरातयोनिष्टप्तꣳरक्षोनिष्टप्ताअरातयः।अनिशितोऽसि
सपत्न क्षिद्वाजिनन्त्वावाजेध्यायैसम्मार्ज्मि।प्रत्युष्टꣳरक्षःप्रत्युष्टाअरातयोनिष्टप्तꣳर
क्षोनिष्टप्ताअरातयः। अनिशितासिसपत्नक्षिद्वाजिनीन्त्वावाजेध्यायैसम्मार्ज्मि॥१।
अदित्यैरास्नासीन्द्राण्यैसन्नहनम्। विष्णोर्वेष्पोऽस्यूर्जेत्वादब्धेनत्वाचक्षुषावपश्या
मि ॥२॥ अग्नेर्जिह्वासिसुभूर्देवेभ्यः।धाम्नेधाम्नेभवयजुषेयजुषे। सवितुस्त्वाप्रसव
उत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः।सवितुर्वःप्रसवउत्पुनाम्यच्छिद्रेणपवित्रे
णसूर्यस्यरश्मिभिः ॥३॥ तेजोऽसिशुक्रमस्यमृतमसिधामनामासि। प्रियन्देवानाम
नाधृष्टन्देवयजनम् ॥ ४ ॥ यस्तेप्राणःपशुषुप्रविष्टोदेवानाँविष्ठामनुयोवितस्थे॥ आ
त्मन्वान्त्सोमघृतवान्हिभूत्वाग्निंगच्छस्वर्यजमानायविन्द ॥ ५॥ १० हरिःॐम्

इषेत्वातिस्रः ॥ ३ ॥ ध्रौरासिचतस्रः ॥ ४ ॥ अग्नेव्रतपतेऽष्ट ॥ ८ ॥ पवित्रेस्थश्चत

स्रः ॥ ४ ॥ शर्मासिसप्त ॥ ७ ॥ धृष्टिरसिचतस्रः ॥ ४ ॥ शर्मपञ्च ॥ ५ ॥

देवस्यत्वाचतस्रः ॥ ४ ॥ द्वितीयोदेवस्यत्वाषट् ॥ ६ ॥ प्रत्युष्टम्पञ्च ॥ ५ ॥ दशा

नुवाकेषुपञ्चाशत् ॥ इषेदेवस्यसमाःपञ्चाशत् ॥ ५० ॥ ॥ इतिशुक्लयजुर्वेदकाण्व

संहितापाठेप्रथमोऽध्यायः ॥ ॥ हरिः३ॐम्

कृष्णोऽस्याखरेष्ठोऽग्नयेत्वाजुष्टम्प्रोक्षामिवेदिरसिबर्हिषेत्वाजुष्टाम्प्रोक्षामि। बर्हिरसि

स्रुग्भ्यस्त्वाजुष्टम्प्रोक्षामि॥१॥अदित्यैव्युन्दनमसिविष्णोस्स्तुपोऽसि।ऊर्णम्रदसन्त्वा

स्तृणामिस्वासस्थान्देवेभ्यः२भूपतयेस्वाहाभुवनपतयेस्वाहाभूतानाम्पतयेस्वाहा।ग

न्धर्वस्त्वाविश्वावसुःपरिदधातुविश्वस्यारिष्ट्यै३यजमानस्यपरिधिरस्यग्निरिळईळि

तः।इन्द्रस्यबाहुरसिदक्षिणोविश्वस्यारिष्ट्यै।यजमानस्यपरिधिरस्यग्निरिळईळितः॥

मित्रावरुणौत्वोत्तरतः परिधत्तान्ध्रुवेणधर्मणा विश्वस्यारिष्ट्यै ॥ यजमानस्यपरि
धिरस्यग्निरिळईळितः ॥४॥ वीतिहोत्रन्त्वाकवेद्युमन्तꣳसमिधीमहि ॥ अग्नेबृह
न्तमध्वरे ॥५॥ समिदसिसूर्यस्त्वापुरस्तात्पातुकस्याश्चिदभिशस्त्यै ॥ सवितुर्बाहू
स्थः ॥६॥ ऊर्णम्रदसन्त्वास्तृणामिस्वासस्थन्देवेभ्यः ॥ आत्वावसवोरुद्रा आदि
त्यास्सदन्तु ॥७॥ घृताच्यसिजुहूर्नामसेदम्प्रियेणधाम्ना प्रियꣳसदआसीद ॥ घृता
च्यस्युपभृन्नामसेदम्प्रियेणधाम्ना प्रियꣳसदआसीद ॥ घृताच्यसिध्रुवानामसेदम्प्रिये
णधाम्ना प्रियꣳसदआसीद प्रियेणधाम्ना प्रियꣳसदआसीद ॥८॥ ध्रुवाअसदन्नृत
स्ययोनौताविष्णोपाहि ॥ पाहियज्ञम्पाहियज्ञपतिम्पाहिमांय्यज्ञन्यम् ॥२॥ १

अग्नेवाजजिद्वाजन्त्वासरिष्यन्तंवाजजितꣳसम्मार्ज्मि ॥ नमोदेवेभ्यस्स्वधा
पितृभ्यस्सुयमेमेभूयास्तम् ॥१॥ अस्कन्नमद्याज्यन्देवेभ्यस्सम्भ्रियासम्॥आङ्घ्रिणा

विष्णोमात्वाविक्रमिषम् ॥२॥ वसुमतीमग्नेतेच्छायामुपस्थेषँविष्णोस्स्थानमसि॥
इतइन्द्रोवीर्यमकृणोदूर्ध्वोऽध्वरआस्थात् ॥३॥ अग्नेवेर्होत्रँवेर्दूत्यम् ॥ अवतान्त्वाद्या
वापृथिवीअवत्वन्द्यावापृथिवी ॥४॥ स्विष्टकृद्देवेभ्यइन्द्रआज्येनहविषाभूत्स्वाहा॥ स
ञ्ज्योतिषाज्योतिः ॥५॥ अत्रपितरोमादयध्वँयथाभागमावृषायध्वम् ॥ अमी
मदन्तपितरोयथाभागमावृषायिषत॥६॥ उपहूतापृथिवीमातोपमाम्पृथिवीमाताह्वय
ताम्॥ अग्निराग्नीध्रात्स्वाहा ॥७॥ उपहूतोद्यौष्पितोपमान्द्यौष्पिताह्वयताम्॥अग्निरा
ग्नीध्रात्स्वाहा ॥८॥ मर्यादामिन्द्रइन्द्रियन्दधात्वस्मान्रायोमघवानस्सचन्ताम् ॥ अ
स्माकँसन्त्वाशिषस्सत्यानस्सन्त्वाशिषः ॥ अग्नेवाजजिद्वाजन्त्वासस्वाँसँवाज
जितँसम्मार्ज्मि ॥ ९ ॥ २

देवसवितरेतन्त्वावृणतेबृहस्पतिम्ब्रह्माणम् ॥ तदस्मैनसेप्रब्रवीमि ॥१॥

मनो गायत्र्यैगायत्रीत्रिष्टुभेत्रिष्टुब्जगत्यैजगत्यनुष्टुभे ॥ अनुष्टुप्सावित्र्यैसवितादेवआदित्यै

विश्वेभ्योदेवेभ्यः ॥ २ ॥ बृहस्पतिर्देवानाम्ब्रह्माहम्मनुष्याणाम् ॥ वाचं [illegible]

स्तःपाप्मनःमहस्त्वबृहस्पतेममदोदिर्मोदासि ॥३॥ मित्रस्यत्वाचक्षुषाप्रतीक्षे ॥ देवस्य

त्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ प्रतिष्ठासि [illegible]

भौसादयाम्यदित्याउपस्थे ॥ देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ता

भ्याम् ॥ ४ ॥ आददेऽभ्र्यसिनग्राभ्यासिबृहस्पतेर्मूर्ध्ना ॥ [illegible] देवतास्ता

इदꣳशंमयन्तु ॥ ५ ॥ स्वाहाकृतञ्जठरमिन्द्रस्यगच्छ ॥ घर्मितासिमासम्पृक्धाऊ

र्ध्वम्मेनाभेस्सीद ॥ ६ ॥ इन्द्रस्यत्वाजठरेसादयामि ॥ प्रजापतेर्भागोस्यूर्जस्वान्प

यस्वान् ॥ ७॥ प्राणापानौमेपाहिसमानव्यानौमेपाह्युदानव्यानौमेपाहि ॥ ऊर्ग

स्यूर्जम्मयिधेह्यक्षितिरसिमामेक्षेष्ठाअमुत्रामुष्मिँल्लोकइहच ॥ ८ ॥ एषातेअग्नेस

मित्तयावर्धस्वचाचंप्यायस्व ॥ वर्धिषीमहिचवयमाचंप्यासिषीमहि ॥ ९ ॥ एतत्ते देवसवितुर्यज्ञम्प्राहुर्बृहस्पतयेब्रह्मणे ॥ तेनयज्ञमवतेनयज्ञपतिन्तेनमामव ॥ १० ॥ मनोज्योतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोतु ॥ अरिष्टँय्यज्ञꣳसमिमन्दधातुविश्वेदेवासइहमादयन्तामो३प्रतिष्ठ ॥ ११ ॥ ३

अग्नीषोमयोरुज्जितिमनूज्जेषँव्वाजस्यमाप्रसवेनप्रोहामि ॥ अग्नीषोमौतमपनुदताँय्योऽस्मान्द्वेष्टियञ्चवयन्द्विष्मोवाजस्यैनम्प्रसवेनापोहामि ॥ इन्द्राग्न्योरुज्जितिमनूज्जेषँव्वाजस्यमाप्रसवेनप्रोहामि ॥ इन्द्राग्नीतमपनुदताँय्योऽस्मान्द्वेष्टियञ्चवयन्द्विष्मोवाजस्यैनम्प्रसवेनापोहामि ॥१॥ वसुभ्यस्त्वारुद्रेभ्यस्त्वादित्येभ्यस्त्वा ॥ सञ्जानाथान्द्यावापृथिवीमित्रावरुणौत्वावृष्ट्यावताम् ॥२॥ व्यन्तुवयोरिप्तोरिहाणामरुताम्पृषतीङ्गच्छ ॥ वशापृश्निर्भूत्वादिवङ्गच्छततोनोवृष्टिमावह ॥ ३ ॥ चक्षुष्पा

असिचक्षुर्मेपाहि ॥ यम्परिधिम्पर्यधत्थाअग्नेदेवपणिभिर्गुह्यमानः ॥४॥ तन्तएत
मनुजोषम्भराम्येपनेत्वदपचेतयाति । अग्नेःप्रियम्पाथोऽपीतम् ॥५॥ सꣳस्रवभो
गास्थेषा वृहन्तःप्रस्तरेष्ठाःपरिधेयश्चदेवाः ॥ इमाँवाचमभिविश्वेगृणन्तआसद्या
स्मिन्बर्हिषिमादयध्वꣳस्वाहावाट् ॥ घृताचीस्थोधुर्योपातꣳसुम्नेस्थस्सुम्नेमाधत्त
म् ॥ ६ ॥ ४

अग्नेऽदब्धायोऽशीतमपाहिमादिद्योःपाहिप्रसित्यैपाहिदुरिष्ट्यैपाहिदुरद्मन्यै॥
आविषन्नःपितुङ्कृणुसुपदायोनौस्वाहावाट् ॥१॥ अग्नयेसँवेशपतयेस्वाहासरस्वत्यै
यशोभगिन्यैस्वाहा ॥ उलूखलेमुसलेयच्चशूर्पेआशिश्लेषदृषदियत्कपाले ॥ २ ॥
उत्प्रुषोविप्रुषस्सञ्जुहोमिसत्यास्सन्तुयजमानस्यकामास्स्वाहा ॥ आप्यायताम्ध्रु
वाहविषाघृतेनयज्ञँयज्ञम्प्रतिदेवयद्भ्यः ॥ सूर्यायाऊधोअदित्याउपस्थउरुधारा

पृथिवीयज्ञेअस्मिन् ॥ ३ ॥ देवागातुविदोगातुमित्वागातुमित ॥ मनसस्पतइ
मन्देवयज्ञᳬस्वाहावातेधाः ॥ ४ ॥ सम्बर्हिरङ्क्ताᳬहविषाघृतेनसमादित्यैर्वसुभि
स्सम्मरुद्भिः ॥ समिन्द्रोविश्वदेवेभिरङ्क्तान्दिव्यन्नभोगच्छतुयत्स्वाहा ॥५॥कस्त्वा
विमुञ्चतिसत्वाविमुञ्चतिकस्मैत्वाविमुञ्चति तस्मैत्वाविमुञ्चति॥ पोषायरक्षसाम्भा
गोऽसि॥६ ॥ वेषोऽस्युपवेषोऽसिपतोप्रीवाउपवेषोविहि ॥ वेदाँऽअस्मैसुभगधारयेह ॥७॥
ऋद्धाः कर्मण्याअनपायिनोयथासन् ॥ जुहोमित्वासुभगसौभगायपुरुतमम्पुरुहूतञ्च
वस्यन् ॥८॥ ५

सँव्वर्चसापयसासन्तनूभिरगन्महिमनसासᳬशिवेन ॥त्वष्टासुदत्रोविदधातु
रायोऽनुमार्ष्टुतन्वोयद्विलिष्टम् ॥९॥ यज्ञातान्वन्नउपन्व ॥ दिवेमेसन्तिष्ठस्वारिष्टेमेस
न्तिष्ठस्वास्विष्टेमेसन्तिष्ठस्व॥१०॥ दिविविष्णुर्व्यक्रᳬस्तजागतेनच्छन्दसाततोनिर्भक्तः॥

योऽस्मान्द्वेष्टियञ्चवयन्द्विष्मः॥अन्तरिक्षेविष्णुर्व्यक्रꣳस्तत्रैष्टुभेनच्छन्दसाततोनि
र्भक्तः॥योऽस्मान्द्वेष्टियञ्चवयन्द्विष्मः॥पृथिव्यांविष्णुर्व्यक्रꣳस्तगायत्रेणच्छन्दसा
ततोनिर्भक्तः॥ योऽस्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ ३ ॥ अस्मादन्नादस्यैप्रतिष्ठाया
अगन्मस्वः ॥ सञ्ज्योतिषाभूम ॥४॥ स्वयम्भूरसिश्रेष्ठोरश्मिर्वर्चोदाअसिवर्चोमेदे
हि॥ सूर्यस्यावृतमन्वावर्ते ॥ ५ ॥ अग्नेगृहपतेसुगृहपतिस्त्वयाऽग्नेऽहङ्गृहपतिनाभूया
सम् ॥ सुगृहपतिस्त्वम्मयाग्नेगृहपतिनाभूयाः ॥ ६ ॥ अस्थूरिणौगार्हपत्यानिस
न्तुशतꣳहिमाः ॥ तिग्मेननस्तेजसासꣳशिशाधिसूर्यस्यावृतमन्वावर्ते ॥७॥ उ
रुविष्णोविक्रमस्वोरुक्षयायनस्कृधि ॥ घृतङ्घृतयोनेपिबप्रप्रयज्ञपतिन्तिर ॥८॥
ततोऽसितन्तुरस्यनुमातनुहि ॥ अस्मिन्यज्ञस्याꣳसाशुक्त्यायमस्मिन्क्षेत्रेऽस्मिल्लोके
॥ ९ ॥ इदम्मेकर्मेदंवीर्यम्पुत्रोऽनुसन्तनोतु ॥अग्नेव्रतपतेव्रतमचारिषन्तदशकन्त

न्मोऽराधि ॥ इदमहँय्यएवास्मिसएवास्मि ॥ १० ॥ ६
अग्नयेकव्यवाहनायस्वाहासोमायपितृमतेस्वाहा ॥ अपहताअसुरारक्षाᳪं
सिवेदिषदः ॥ १ ॥ येरूपाणिप्रतिमुञ्चमानाअसुरास्सन्तस्स्वधयाचरन्ति ॥ परा
पुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ २ ॥ अत्रपितरोमादयध्वँय्य
थाभागमावृषायध्वम् ॥ अमीमदन्तपितरोयथाभागमावृषायिषत ॥ ३ ॥
नमोवःपितरश्शुष्मायनमोवःपितरस्तपसे ॥ नमोवःपितरोयज्जीवन्तस्मैनमोवः
पितरोरसाय ॥ नमोवःपितरोघोरायमन्यवेस्वधायैवःपितरोनमः ॥ एतद्वःपित
रोवासोगृहान्नःपितरोदत्त ॥ ४ ॥ उदायुषास्वायुषोत्पर्जन्यस्यधामभिः ॥ उ
दस्थाममृताँऽअनु ॥ ५ ॥ आधत्तपितरोगर्भङ्कुमारम्पुष्करस्रजम् ॥ यथेहपुरुषोऽ
सत्॥६ ॥ ऊर्जँव्वहन्तीरमृतङ्घृतम्पयः कीलालम्परिस्रुतम् ॥ स्वधास्थतर्पयतमे

पितृन् ॥ ७ ॥ ७ ॥ हरिः ॐ ॥ कृष्णोऽस्यनव ॥ ९ ॥ अग्नेवाजजिच्च ॥९॥ देवसवितरेकादश ॥ ११ ॥ अग्नीषोमयोष्पट् ॥ ६ ॥ अग्नऽद्व्वायोऽष्ट ॥ ८ ॥ सँव्वर्चसादश ॥ १० ॥ अग्नयेकव्यवाहनायस्त ॥ ७ ॥ मसानुवाकेषुषष्टिः ॥ ६० ॥ कृष्णइमम्मेषष्टिः ॥ इतिशुक्लयजुर्वेदसंहितापाठेद्वितीयोऽध्यायः हरिःॐ ॥

समिधाग्निन्दुवस्यतघृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥१॥ सुसमिद्धायशोचिषेघृतन्तीव्रञ्जुहोतन ॥ अग्नयेजातवेदसे ॥ २ ॥ तन्त्वासमिद्भिरङ्गिरोघृतेनवर्धयामसि ॥ बृहच्छोचायविष्ठ्य ॥ ३ ॥ उपत्वाग्नेहविष्मतीर्घृताचीर्यन्तुहर्यत ॥ जुषस्वसमिधोमम ॥ ४ ॥ भूर्भुवस्वर्द्यौरिवभूम्नाभूमिरिववरिम्णा ॥ तस्यास्तेपृथिविदेवयजनिपृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥ ५ ॥ आय

द्यौःपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्रयन्त्स्वः ॥ ६ ॥ अन्तश्चरतिरो
चनास्यप्राणादपानती ॥ व्यख्यन्महिषोदिवम् ॥ ७ ॥ त्रि ँ शद्धामविराजति
वाक्पतङ्गायधीयते ॥ प्रतिवस्तोरहद्युभिः ॥ ८ ॥ १

अग्निर्ज्योतिषन्त्वावायुमतीम्प्राणवतीम् ॥ स्वर्ग्यां ँ स्वर्गायोपदधामिभा
स्वतीम् ॥ अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहा ॥ १ ॥ सूर्यज्योतिषन्त्वावायुमतीम्प्राण
वतीम् ॥ स्वर्ग्यां ँ स्वर्गायोपदधामिभास्वतीम् ॥ सूर्योज्योतिर्ज्योतिस्सूर्यस्स्वाहा ॥ २ ॥
सजूर्देवेनसवित्रासजूरात्र्येन्द्रवत्या ॥ जुषाणोअग्निर्वेतुस्वाहा ॥ ३ ॥ सजूर्देवेन
सवित्रासजूरुषसेन्द्रवत्या ॥ जुषाणस्सूर्योवेतुस्वाहा ॥ ४ ॥ इहपुष्टिम्पुष्टिपतिर्द
धात्विहप्रजा ँ रमयतुप्रजापतिः ॥ अग्नयेगृहपतयेरयिमतेपुष्टिपतयेस्वाहा ॥ अग्न
येऽन्नादायान्नपतयेस्वाहा ॥ ५ ॥ अनमिलम्मेअधरागनमित्रमुदक्कृधि ॥ इन्द्रान

मित्रम्पश्चान्मेऽनामिलम्पुरस्कृधि ॥ ६ ॥ इन्द्रः पश्चादिन्द्रः पुरस्तादिन्द्रोऽअस्माँ२ऽअ
भिपातुविश्वतः ॥ इन्द्रोजिघांऽसताम्मनांऽसिविपूर्चीनाऽयंम्यनात् ॥ ७ ॥ सामि
दंसिसमिंद्धोमेअम्नेदीदिहि ॥ समंद्धातेंअग्नेर्दीद्यान्नम् ॥ ८ ॥ २

उपप्रयन्तोअध्वरम्मन्त्रँव्वोचेमाग्नये ॥ आरेअस्मेचशृण्वते ॥ १ ॥ अग्नि
र्मूर्धादिवःककुत्पतिः पृथिव्याअयम् ॥ अपांऽरेतांऽसिजिन्वति ॥ २ ॥ उभावा
मिन्द्राग्नीआहुवध्याउभाराधसस्सहमादयध्यै ॥ उभादातारांइषांऽरयीणामुभावा
जस्यसातयेहुवेवाम् ॥ ३ ॥ अयन्तेयोनिर्ऋत्वियोयतोजातोअरोचथाः ॥ तञ्जानन्न
ग्नआरोहाथानोवर्धयारयिम् ॥ ४ ॥ अयमिहप्रथमोधायिधातृभिर्होतायजिष्ठोअ
ध्वरेष्वीड्यः ॥ यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रँव्विभ्वँव्विशेविशे ॥ ५ ॥
अस्यप्रत्नामनुद्युतंऽशुक्रन्दुदुह्रेअह्रयः ॥ पयस्सहस्रसामृषिम् ॥६॥ तनूपाअ

ग्नेऽसितन्वम्मेपाह्यायुर्दाअग्नेस्यायुर्मेदेहि ॥ वर्चोदाअग्नेऽसिवर्चोमेदेहि ॥ ७ ॥
अग्नेयन्मेतन्वाऊनन्तन्मआपृण ॥ इन्धानास्त्वाशतꣳहिमाद्युमन्तꣳसमिधीमहि
॥ ८ ॥ वयस्वन्तोवयस्कृतꣳसहस्वन्तस्सहस्कृतम् ॥ अग्नेसपत्नदम्भनमद
ब्धासोअदाभ्यम् ॥ ९ ॥ चित्रावसोस्वस्तितेपारमशीय ॥ सन्त्वमग्नेसूर्यस्य
वर्चसागथास्समृषीणाꣳस्तुतेन ॥ १० ॥ सम्प्रियेणधाम्नासमहमायुषासँवर्चसा
सम्प्रजयासꣳरायस्पोषेणग्मिषीय ॥ अन्धस्स्थान्धोवोभक्षीयमहस्स्थमहोवोभक्षी
य ॥ ११ ऊर्जस्स्थोर्ज्जँव्वोभक्षीयरायस्पोषस्स्थरायस्पोषँव्वोभक्षीय ॥ रेवती
रमध्वमस्मिन्योनावस्मिन्गोष्ठेऽस्मिन्क्षयेऽस्मिँल्लोके ॥ १२ ॥ इहैवस्तेतोमा
पगात ॥ सꣳहितासिविश्वरूप्यूर्जामाविशगौपत्येन ॥ १३ ॥ उपत्वाग्नेदिवेदि
वेदोषावस्तर्धियावयम् ॥ नमोभरन्तएमसि ॥ १४ ॥ राजन्तमध्वराणा

क्षोपामृतस्यदीदिविम् ॥ वर्धमानꣳस्वेदमे ॥ १५ ॥ सनःपितेवसूनवेऽग्नेसू
पायनोभव ॥ सचस्वानस्स्वस्तये ॥ १६ ॥ अग्नेत्वन्नोअन्तमउतत्राताशि
वोभवावरूथ्यः ॥ वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमꣳरयिन्दाः ॥ १७ ॥
तन्त्वाशोचिष्ठदीदिवस्सुम्नायनूनमीमहेसखिभ्यः ॥ सनोबोधिश्रुधीहवमुरु
ष्याणोअघायतस्समस्मात् ॥ १८ ॥ इळएह्यदितएहिकाम्यएहि ॥ मयि
वःकामधरणम्भूयात् ॥ १९ ॥ सोमानꣳस्वरणङ्कृणुहिब्रह्मणस्पते ॥ कक्षीवं
न्तँय्यऔशिजः ॥ २० ॥ योरेवान्योअमीवहावसुवित्पुष्टिवर्धनः ॥ सनस्सि
षक्तुयस्तुरः ॥ २१ ॥ मानश्शꣳसोअररुषोधूर्तिःप्रणङ्मर्त्यस्य ॥ रक्षाणोब्रह्म
णस्पते ॥ २२ ॥ महित्रीणामवोऽस्तुद्युक्षम्मित्रस्यार्यम्णः ॥ दुराधर्षँवरु
णस्य ॥ २३ ॥ नहितेषाममाचननाध्वसुवारणेषु ॥ ईशेरिपुरघशꣳसः ॥ २४ ॥

तेहिपुत्रासोआदितेःप्रजीवसेमर्त्याय ॥ ज्योतिर्यच्छन्त्यजस्रम् ॥ २५ ॥ क
दाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयइन्नुतेदानन्देवस्य
पृच्यते ॥ २६ ॥ तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचो
दयात् ॥ २७ ॥ परितेदूळभोरथोऽस्माँ२अश्नोतुविश्वतः ॥ येनरक्षसिदाशु
षः ॥ समिद्धोमासमर्धयप्रजयाचधनेनच ॥ २८ ॥ ३

भूर्भुवस्स्वस्सुप्रजाः प्रजयाभूयासम् ॥ सुवीरोवीरैस्सुपोपःपोषैः ॥ १ ॥ न
र्यप्रजाम्मेपाहिशꣳस्यपशून्मेपाहि ॥ आगन्मविश्ववेदसमस्मभ्यँवसुवित्तमम्॥२॥
अग्ने सम्राळभिद्युम्नमभिसहआयच्छस्व ॥ अयमग्निर्गृहपतिर्गार्हपत्यः प्रजावान्व
सुवित्तमः॥३॥ अग्नेगृहपतेऽभिद्युम्नमभिसहआयच्छस्व ॥ गृहामाबिभीतमावेप
ध्वमूर्जम्बिभ्रतएमसि ॥ ४ ॥ ऊर्जम्बिभ्रद्वस्सुमनास्सुमेधागृहानैमिमनसामोद

मानः ॥ येषामध्येतिप्रवसन्येषुसौमनसोबहुः ॥ ५ ॥ गृहानुपह्वयामहेतेनोजान
न्तुजानतः ॥ उपहूताइहगावउपहूताअजावयः ॥६ ॥ अथोअन्नस्यकीलालउपहू
तोगृहेषुणः ॥ क्षेमायवश्शान्त्यैप्रपद्ये ॥ शिवꣳशग्मꣳशँय्योश्शँय्योः ॥ ७ ॥ ८ ॥
प्रघासिनोहवामहेमरुतश्चरिशादसः ॥ करम्भेणसजोषसः ॥ १ ॥ य
द्ग्रामे यदरण्येयत्सभायाँय्यदिन्द्रिये ॥ यदेनश्चकृमावयमिदन्तदवयजामहे
स्वाहा ॥ २ ॥ मोपूणइन्द्रात्रपृत्सुदेवैरस्तिहिष्मातेशुष्मिन्नवयाः ॥ मह
श्चिद्यस्यमीढुषोयव्याहविष्मतोमरुतोवन्दतेगीः ॥ ३ ॥ अक्रन्कर्मकर्मकृत
स्सहवाचामयोभुवा ॥ देवेभ्यःकर्मकृत्वास्तम्प्रेतसचाभुवः ॥ ४ ॥ अवभृथ
निचुम्पुणनिचेरुरसिनिचुम्पुण ॥ अवदेवैर्देवकृतमेनोऽयासिषमवमर्त्यैर्मर्त्यकृत
म्पुरुराव्णोदेवरिषस्पाहि ॥ ५ ॥ ५

पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जꣳशतक्रतो
॥ १ ॥ देहिमेददामितेनिमेधेहिनितेदधौ ॥ निहारान्निहरामितेनिहारन्निहरा
सिमेस्वाहा ॥ २ ॥ ६

अक्षन्नमीमदन्तह्यवप्रियाअधूषत॥ अस्तोषतस्वभानवोविप्रानविष्ठयामती
योजान्विन्द्रतेहरी ॥ १ ॥ सुसन्दृशन्त्वावयम्मघवन्वन्दिषीमहि ॥ प्रनून
म्पूर्णबन्धुरस्स्तुतोयासिवशाँ२अनुयोजान्विन्द्रतेहरी ॥ २ ॥ मनोन्वाह्वामहे
नाराशꣳसेनस्तोमेन ॥ पितॄणाञ्चमन्मभिः ॥ ३ ॥ आनएतुमनःपुनःक्रत्वे
दक्षायजीवसे ॥ ज्योक्चसूर्यन्दृशे ॥४॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥
जीवँव्व्रातꣳसचेमहि ॥ ५ ॥ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तस्सचे
महि ॥६॥ ७

एषतेरुद्रभागस्सहस्वस्राम्बिकयातञ्जुषस्वस्वाहा ॥ एषतेरुद्रभागआखुस्ते
पशुः ॥१॥ अवरुद्रमदीमह्यवदेवन्त्र्यम्बकम् ॥ यथानोवस्यसस्करद्यथानश्श्रेयस
स्करद्यथानोव्यवसाययात् ॥ २॥ भेषजमसिभेषजङ्गवेऽश्वायपुरुषायभेषजम् ॥ सुग
म्मेषायमेष्यै ॥३॥ त्र्यम्बकँय्यजामहेसुगन्धिम्पुष्टिवर्धनम् ॥ उर्वारुकमिवबन्धना
न्मृत्योर्मुक्षीयमामृतात् ॥४॥ त्र्यम्बकँय्यजामहेसुगन्धिम्पतिवेदनम् ॥ उर्वारुकमि
वबन्धनादितोमुक्षीयमामुतः ॥५॥ एतेनरुद्रावसेनपरोमूजवतोतीहि ॥ अवततध
न्वापिनाकावसःकृत्तिवासाअहिँसन्नश्शिवश्शान्तोतीहि ॥ ६ ॥ ८
वाजिनाँव्वाजोऽवतुभक्षोअस्मात्रतस्सिक्तममृतम्बलाय ॥ विश्वेदेवाअभियत्स
म्बभूवुस्तन्माधिनोतुप्रजयाधनेन ॥ १ ॥ वाज्यहँव्वाजिनस्योपहूतउपहूतस्यभ
क्षयामि ॥ वाजेवाजीभूयासम् ॥ २ ॥ सवित्राप्रसूतादैव्यआपउन्दन्तुतेतनू

म् ॥ दीर्घायुत्वायवर्चसे ॥ ३ ॥ कश्यपस्य-त्र्यायुषञ्जमदग्नेस्त्र्यायुषम् ॥
यद्देवानान्त्र्यायुषन्तन्मेअस्तुत्र्यायुषम् ॥ ४ ॥ येनधाताबृहस्पतेरिन्द्रस्यचायुषेव
पत् ॥ तेनंतेवपामिब्रह्मणाजीवातवेजीवनाय ॥ ५ ॥ दीर्घायुत्वायबलायव
र्चसे ॥ सुप्रजास्त्वायचासाअथोजीवशरदश्शतम् ॥ ६ ॥ ९ ॥ हरिःॐ ॥
समिधाग्निमष्ट ॥ ८ ॥ अग्निज्योतिषन्त्वाच ॥ ८ ॥ उपप्रयन्तोऽष्टाविंशतिः ॥ २८ ॥
भूर्भुवस्सप्त ॥ ७ ॥प्रयासिनःपञ्च ॥ ५ ॥ पूर्णादर्विद्वे ॥ २ ॥ अक्षन्नमीमदन्तष
ट् ॥ ६ ॥ एषतेच ॥ ६ ॥ वाजिनांवाजश्च ॥ ६ ॥ नवानुवाकेषुषट्सप्ततिः ॥ ७६ ॥
इतिशुक्लयजुर्वेदकाण्वसंहितापाठेतृतीयोऽध्यायः ॥
हरिःॐ ॥ एदमगन्मदेवयजनम्पृथिव्यायत्रदेवासोअजुषन्तविश्वे ॥ ऋक्सा
माभ्याᳪसन्तरन्तोयजुर्भीरायस्पोषेणसमिषामदेम ॥ १ ॥ इमाआपश्शमुमेसन्तु

देवीरोषधेत्रायस्वस्वधितेमैनꣳहिꣳसीः ॥ आपोअस्मान्मातरꣳशुन्धयन्तुघृतेन नोघृतप्वः पुनन्तु ॥ २ ॥ विश्वꣳ हिरिप्रम्प्रवहन्ति देवीरुदिदाभ्यꣳशुचिरापू तएमि ॥ दीक्षातपसोस्तनूरसि तान्त्वा शिवाꣳ शग्माम्परि दधभद्रँवर्णम्पु ष्यन्॥ ३ ॥ १

महीनाम्पयोअसिवर्चोदाअसिवर्चोमेदेहि ॥ वृत्रस्यकनीनकासिचक्षुर्दाअसि चक्षुर्मेदेहि ॥ १ ॥ चित्पतिर्मापुनातुवाक्पतिर्मापुनातुदेवोमासवितापुनात्वच्छिद्रे णपवित्रेणसूर्यस्यरश्मिभिः ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ २ ॥ आवोदेवासईमहेवामम्प्रयत्यध्वरे ॥ आवोदेवासआशिषोयज्ञियासोहवा महे ॥ ३ ॥ स्वाहायज्ञम्मनसस्स्वाहोरोरन्तरिक्षात् ॥ स्वाहाद्यावापृथिवीभ्याꣳ स्वाहावातादारभे ॥ ४ ॥ २

आकूत्यैप्रयुजेऽग्नयेस्वाहामेधायैमनसेऽग्नयेस्वाहादीक्षायैतपसेऽग्नयेस्वाहासरस्व
त्यैपूष्णेऽग्नयेस्वाहा ॥ आपोदेवीर्बृहतीर्विश्वशम्भुवोद्यावापृथिवीउर्वन्तरिक्ष ॥
बृहस्पतयेहविषाविधेमस्वाहा ॥१॥ विश्वोदेवस्यनेतुर्मर्तोवुरीतसख्यम् ॥ वि
श्वोरायइषुध्यतिद्युम्नँवृणीतपुष्यसेस्वाहा ॥२॥ ३
ऋक्सामयोश्शिल्पेस्थस्तेवामारभेतेमापातम् ॥ आस्ययज्ञस्योद्दचः ॥ १ ॥ श
र्मासिशर्ममेयच्छनमस्तेअस्तुमामाहिꣳसीः ॥ ऊर्गस्याङ्गिरस्यूर्णम्रदाऊर्ज्जम्मेय
च्छ ॥ २ ॥ सोमस्यनीविरसिविष्णोश्शर्मासिशर्मयजमानस्य ॥ इन्द्रस्ययो
निरसिसुसस्याःकृषीस्कृधि ॥ ३ ॥ उच्छ्रयस्ववनस्पतऊर्ध्वोमापाह्यꣳहसः ॥
आस्ययज्ञस्योद्दचः ॥४॥ ४
व्रतंकृणुतव्रतंकृणुतव्रतंकृणुत ॥ अग्निर्ब्रह्माग्निर्यज्ञोवनस्पतिर्यज्ञियः ॥ १ ॥ दै

वीन्धियंम्मनामहेसुमृळीकामभिष्टये ॥ वर्चोदाँव्विश्वधायस सुतीर्थानोअसद्दशे॥
२ ॥ येदेवामनोजातामनोयुजोदक्षक्रतवः ॥ तेनोवन्तुतेनःपान्तुतेभ्यस्स्वा
हा ॥ ३ ॥ श्वात्राःपीताभवतयूयमापोअस्माकमन्तरुदरेसुशेवाः ॥ ताअस्मभ्य
मयक्ष्माअनमीवाअनागसस्स्वदन्तुदेवीरमृताऋतावृधः ॥ ४ ॥ इयन्तेयज्ञियात
नूरपोमुञ्चामिनप्रजाम् ॥ अंहोमुचस्स्वाहाकृताःपृथिवीमाविशतपृथिव्यासम्भव ॥
५ ॥ अग्नेत्व सुजागृहिवय सुमन्दिषीमहि ॥ रक्षाणोअप्रयुच्छन्प्रबुधेनःपुन
स्कृधि ॥ ६ ॥ पुनर्मनःपुनरायुर्मआगात्पुनश्चक्षुःपुनश्श्रोत्रम्मआगात् ॥ पुनःप्रा
णःपुनरात्माममआगाद्वैश्वानरोअदब्धस्तनूपाअग्निर्मापातुदुरितादवद्यात् ॥ ७ ॥ त्व
मग्नेव्रतपाअसिदेवआमर्त्येष्वा ॥ त्वंयज्ञेष्वीड्यः ॥ ८॥ रास्वेयत्सोमाभूयोभर ॥
देवोनस्सवितावसोर्दातावस्वदात् ॥ ९ ॥ ५

एषातैशुक्रतनूरेतद्वर्चस्तयासम्भवभ्राजङ्गच्छ ॥ जूरसिधृतामनसाजुष्टाविष्ण
वे ॥ १ ॥ तस्यास्तेसत्यसवसःप्रसवेतनुयन्त्रमशीयस्वाहा ॥ चन्द्रमासिशुक्रम
स्यमृतमसिवैश्वदेवमसि ॥ २ ॥ चिदसिमनासिधीरसिदक्षिणासिक्षत्रियासियज्ञि
यास्यदितिरस्युभयतश्शीर्ष्णी ॥ सानस्सुप्राचीसुप्रतीचीभव ॥ ३ ॥ मित्रस्त्वापदिब
ध्नीताम्पूषाध्वनस्पात्विन्द्रायाध्यक्षाय ॥ अनुत्वामातामन्यतामनुपितानुभ्राता
सगर्भ्योऽनुसखासयूथ्यः ॥ ४ ॥ सादेविदेवमच्छेहीन्द्रायसोमम् ॥ रुद्रस्त्वाव
र्तयतुस्वस्तिसोमसखापुनरेहि ॥ ५ ॥ ६

वस्व्यस्यदितिरस्यादित्यासिरुद्रासिचन्द्रासि ॥ बृहस्पतिष्ट्वासुम्नेरम्णातुरु
द्रोवसुभिराचके ॥ १ ॥ अदित्यास्त्वामूर्धन्नाजिघर्मिदेवयजनेपृथिव्याः ॥ इळा
यास्पदमसिघृतवत्स्वाहा ॥२॥ अस्मेरमस्वास्मेतेबन्धुः ॥ त्वेरायोअस्मेरायः ॥३॥

मावयꣳरायस्पोषेणावियौष्मतोतोरायः ॥ समंख्येदेव्याधियासन्दाक्षिणयोरुचक्षसा॥
मामआयु:प्रमोषीर्मोअहन्तववीरान्विदेयतवदेविसन्द्दशि ॥ ९ ॥ ७
एषतेगायत्रोभागइतिमेसोमायब्रूतादेषतेत्रैष्टुभोभागइतिमेसोमायब्रूतात् ॥ एष
तेजागतोभागइतिमेसोमायब्रूताच्छन्दोमानानाꣳसाम्राज्यङ्गच्छतादितिमेसोमाय
ब्रूतात् ॥ १ ॥ आस्माकोऽसिशुक्रस्तेग्रह्यः ॥ विचितस्त्वाविचिन्वन्तु ॥ २ ॥
अभित्यन्देवꣳसवितारमोण्योः कविक्रतुमर्चामिसत्यसवꣳरत्नधामाभिप्रियम्मतिङ्क
विम्॥ ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुः कृपास्वः
॥ ३ ॥ प्रजाभ्यस्त्वाप्रजास्त्वानुप्राणन्तु ॥ प्रजास्त्वमनुप्राणिहि॥ ४ ॥ ८
चन्द्रन्त्वाचन्द्रेणक्रीणामिशुक्रꣳशुक्रेणामृतममृतेन ॥ सग्मेतेगोरस्मेतेचन्द्राणि॥
१ ॥ तपसस्तनूरसिप्रजापतेर्वर्णः॥ परमेणपशुनाक्रीयसेसहस्रपोषम्पुषेयम् ॥ २॥

मित्रोनएहिसुमित्रधइन्द्रस्योरुमाविशदक्षिणम् ॥ उशन्नुशन्तँ स्योनस्स्योनम् ॥
३॥ स्वानभ्राजाङ्घारिबम्भारेहस्तसुहस्तकृशानो ॥ एतेवस्सोमक्रयणास्तान्रक्षध्व
म्मावोदभन् ॥४॥ परिमाग्नेदुश्चरिताद्बाधस्वामासुचरितेभज ॥ उदायुषास्वायुषो
दस्थाममृताँ२ऽअनु॥५॥प्रतिपन्थामपद्महिस्वस्तिगामनेहसम् ॥ येनविश्वाःपरिद्वि
षोवृणक्तिविन्दतेवसु॥६॥ ९

आदित्यास्त्वगस्यदित्यैसदआसीद ॥ अस्तभ्नाद्यामृषभोअन्तरिक्षममिमीतव
रिमाणम्पृथिव्याः ॥ आसीदद्विश्वाभुवनानिसम्राड्विश्वेत्तानिवरुणस्यव्रतानि ॥१॥
वनेषुव्यन्तरिक्षन्ततानवाजमर्वत्सुपयउस्त्रियासु॥ हृत्सुक्रतुँवरुणोविक्ष्वग्निन्दिवि
सूर्यमदधात्सोममद्रौ ॥२॥ सूर्यस्यचक्षुरारोहाग्नेरक्ष्णःकनीनकाम् ॥ यत्रैतशेभिरी
यसेभ्राजमानोविपश्चिता॥३॥ उस्राएतन्धूर्षाहौयुज्येथामनश्रूअवीरहणौब्रह्मचोद

नो ॥ स्वस्तियजमानस्य गृहान्गच्छतम् ॥ ४ ॥ भद्रोमेऽसि प्रच्यवस्व भुवस्प
तेविश्वान्याभिधामानि ॥ मात्वापरिपरिणोविदन्मात्वा परिपन्थिनोविदन्मात्वा
वृकाअघायवोविदन् ॥ श्येनोभूत्वा परापतयजमानस्य गृहान्गच्छतन्नौ सꣳस्कृत
म् ॥ ५ ॥ नमोमित्रस्य वरुणस्यचक्षसे महोदेवायतदृतꣳसपर्यत ॥ दूरेदृशेदे
वजातायकेतवे दिवस्पुत्रायसूर्यायशꣳसत ॥ ६ ॥ वरुणस्योत्तम्भनमसिवरुणस्य
स्कम्भसर्जनीस्थः ॥ वरुणस्य ऋतसदन्यसि वरुणस्यऋतसदनमसि वरुणस्यऋ
तसदनीमासीद ॥ ७ ॥ यातेधामानि हविषायजन्तिताते विश्वापरिभूरस्तु यज्ञ
म् ॥ गयस्फानः प्रतरणस्सुवीरोऽवीरहा प्रचरासो मदुर्यान् ॥ ८ ॥ १०

एदमगन्मातिस्रः॥३॥ महीनाश्वतस्रः॥४॥ आकूत्यैद्वे॥२॥ऋक्सामयोश्वतस्रः॥४॥
व्रतंकृणुतनव॥९॥ एषातेपञ्च॥५॥वस्व्यसिचतस्रः ॥४॥ एषतेच॥४॥ चन्द्रन्त्वाषट्॥

६॥ आदित्यास्त्वगष्ट॥८॥ दशानुवाकेष्वेकोनपञ्चाशत्॥४९॥ इति शुक्लयजुर्वेद का
ण्व संहितापाठे चतुर्थोऽध्यायः॥ हरिः ॐ॥

हरिः ॐ॥ अग्नेस्तनूरसिविष्णवेत्वासोमस्यतनूरसिविष्णवेत्वा ॥ अतिथे
रातिथ्यमसिविष्णवेत्वाश्येनायत्वासोमभृते विष्णवेत्वाग्नयेत्वारायस्पोषदेविष्णवे
त्वा ॥१॥ अग्नेर्जनित्रमसिवृषणौस्थः ॥ उर्वश्यस्यायुरसिपुरूरवाअसि ॥ गायत्रे
णत्वाच्छन्दसामन्थामित्रैष्टुभेनत्वाच्छन्दसामन्थामि जागतेनत्वाच्छन्दसामन्था
मि ॥२॥ भवतन्नस्समनसौसचेतसाअरेपसौ ॥ मायज्ञꣳहिꣳसिष्ट म्मायज्ञपतिञ्जा
तवेदसौशिवौभवतमद्यनः ॥३॥ अग्नाअग्निश्चरतिप्रविष्टऋषीणाम्पुत्रोअभिशास्तिपा
वा ॥ सनस्स्योनस्सुयजायजेहदेवेभ्योहव्यꣳसदमप्रयुच्छन्त्स्वाहा ॥४॥ १

आपतयेत्वागृह्णामिपरिपतयेत्वागृह्णामि ॥ तनूनप्त्रेशाक्वरायशक्मन्नोजिष्ठाय ॥

१ ॥ अनाधृष्टमस्यनाधृष्यन्देवानामोजः ॥ अनभिशस्त्यभिशस्तिपा अनभिश
स्तेन्यम् ॥ २॥ अञ्जसासत्यमुपगेषꣳ सुविनेमाधाः ॥ अग्नेव्रतपास्त्वेव्रतपाः ॥ ३ ॥
यातवतनूरियꣳसा मयियामम तनूरेपासा त्वयि ॥ सहनौ व्रतपतेव्रतान्यनुमेदी
क्षान्दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः ॥४॥ अꣳशुरꣳ शुष्टे देवसोमाप्यायता
मिन्द्रायैकधनाविदे ॥ आतुभ्यमिन्द्रः प्यायतामात्वामिन्द्राय प्यायस्व ॥ ५ ॥
आप्याययास्मान्त्सखीन्त्सन्यामेधया ॥ स्वस्ति तेदेवसोम सुत्यामुदृचमशीय ॥
६ ॥ एष्टारायः प्रेषे भगाय ॥ ऋतमृतवादिभ्यो नमो दिवेनमः पृथिव्यै ॥ ७ ॥
यातेअग्नेयश्शयातनूर्वर्षिष्ठा गह्वरेष्ठा ॥ उग्रꣳवचोअपावधीत्त्वेषꣳवचोअपावधीत्स्वा
हा ॥ यातेअग्ने रजश्शया तनूर्वर्षिष्ठागह्वरेष्ठा॥ उग्रꣳवचो अपावधीत्त्वेषꣳवचोअ
पावधीत्स्वाहा ॥ यातेअग्ने हरीशाया तनूर्वर्षिष्ठागह्वरेष्ठा ॥ उग्रꣳवचोअपावधीत्त्वेषꣳ

ऽवचोअपावधीत्स्वाहा ॥ ८ ॥ २

तप्तायनीमेऽसिवित्तायनीमेऽसि ॥ अवतान्माव्यथितमवतान्मानाथितम् ॥१॥
विदेरग्नेर्नभोनामाग्नेअङ्गिरआयुनानाम्नेहि ॥ योस्याम्पृथिव्यामसियत्तेनाधृष्टन्नाम
यज्ञियन्तेनत्वादधे ॥ विदेरग्नेर्नभोनामाग्नेअङ्गिरआयुनानाम्नेहि ॥ योद्वितीयस्या
म्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्वादधे ॥ विदेरग्नेर्नभोनामाग्नेअङ्गिरआ
युनानाम्नेहि ॥ यस्तृतीयस्याम्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्वादधे ॥
अनुत्वादेववीतयेसिꣳह्यसिसपत्नसाहीदेवेभ्यःकल्पस्वासिꣳह्यसि सपत्नसाहीदेवेभ्य
श्शुन्धस्वासिꣳह्यसिसपत्नसाहीदेवेभ्यश्शुम्भस्व ॥२॥ ३

इन्द्रघोषस्त्वावसुभिःपुरस्तात्पातुप्रचेतास्त्वारुद्रैःपश्चात्पातु ॥ मनोजवास्त्वापि
तृभिर्दक्षिणतःपातुविश्वकर्मात्वादित्यैरुत्तरतःपातु॥१॥ इदमहन्तप्तंवार्बहिर्धायज्ञा

न्निस्सृजामि ॥ सि ꣳ ह्यासिस्वाहासि ꣳ ह्यस्यादित्यवनिस्स्वाहा ॥२॥ सि ꣳ ह्यासिब्रह्मव
निः क्षत्रवनिस्स्वाहा सि ꣳ ह्यासिसुप्रजावनीरायस्पोषवनिस्स्वाहा ॥ सि ꣳ ह्यस्यावहदे
वान्यजमानायस्वाहाभूतेभ्यस्त्वा ॥३॥ ध्रुवोऽसिपृथिवीन्दृ ꣳ हध्रुवक्षिदस्यन्तरिक्ष
न्दृ ꣳ ह ॥ अच्युतक्षिदसिदिवन्दृ ꣳ हाग्नेर्भस्मास्यग्नेः पुरीषमासि ॥४॥ ४

युञ्जते मन उतयुञ्जतेधियो विप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रा दधेवयु
नाविदेकइन्महीदेवस्यसवितुः परिष्टुतिः ॥ १ ॥ इदँविष्णुर्विचक्रमेत्रेधानि दधेप
दम् ॥ समूढमस्यपा ꣳ सुरे स्वाहा ॥ २ ॥ इरावती धेनुमतीहिभूत ꣳ सूयव
सिनीमनवेद शस्या ॥ व्यस्कभ्नारोदसी विष्णएते दाधर्थपृथिवी मभितो मयू
खैस्स्वाहा ॥ ३॥ देव श्रुतौदेवेष्वाघोषतम् ॥ प्राचीप्रेतमध्वरङ्कल्पयन्ती ऊर्ध्वंयज्ञ
न्नयतम्मा जिह्वरतम् ॥ ४ ॥ स्वङ्गोष्ठमावदतन्देवीदुर्ये आयुर्मानिर्वादिष्टम्प्रजा

स्मानिर्वीदिष्टम् ॥ अत्ररमे थाँ॑ऽवर्ष्मन्पृथिव्याः ॥ ५ ॥ विष्णोर्नुकँ॑ऽवीर्याणि प्रवो
चँ॑य्यः पार्थिवानिविममेरजाꣳसि ॥ योअस्कभायदुत्तरꣳ सधस्थँ॑ऽविचक्रमाण स्त्रे
धोरुगायो विष्णवेत्वा ॥ ६ ॥ दिवोवा विष्णउतवा पृथिव्या महोवाविष्ण उरोर
न्तरिक्षात् ॥ उभाहिहस्ता वसुना पृणस्वाप्रयच्छ दक्षिणादोतसव्याद्विष्णवेत्वा ॥
७ ॥ प्रतद्विष्णुस्स्तवतेवीर्येण मृगोनभीमः कुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषु विक्र
मणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ ८ ॥ विष्णोररराटमसि विष्णोश्श्नप्त्रेस्थोवि
ष्णोस्स्यूरसिविष्णोर्ध्रुवोऽसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ९ ॥ ५
देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ आददेनार्यसीद
महꣳरक्षसोग्रीवाअपिकृन्तामि ॥ बृहन्नसिबृहद्ग्रवाबृहतीमिन्द्रायवाचँ॑ऽवद ॥ रक्षो
हणँ॑ऽवलगहनँ॑ऽवैष्णवीम् ॥ १ ॥ इदमहन्तँ॑ऽवलगमुद्वपामियन्नोनिष्ट्योयममात्योनिच

खानं॥ इदमहन्तँ व्वलगमुद्वपामियन्नस्समानोयमसमानोनिच खान॥ इदमहन्तँ
व्वलगमुद्वपामियन्नस्सवन्धुर्यमसवन्धुर्निचखानं ॥ इदमहन्तँ व्वलगमुद्वपामियन्नं
स्सजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ॥२॥ स्वराळसिसपत्नहासत्रराळस्य
भिमातिहा ॥ जनराळसि रक्षोहा सर्वराळस्यमित्रहा ॥३॥ रक्षोहणो वलगहनः
प्रोक्षामि वैष्णवान्रक्षोहणो वलगहनोऽवनयामि वैष्णवान् ॥ रक्षोहणो वलगहनो
ऽवस्तृणामि वैष्णवान् ॥४॥ रक्षोहणौ वलगहनाउपदधामि वैष्णवी रक्षोहणौ व
लगहनौ पर्यूहामि वैष्णवी ॥ वैष्णवमसि वैष्णवास्स्थ ॥५॥ ६

देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ आददेनार्यसी
दमहꣳ रक्षसोग्रीवा अपि कृन्तामि ॥ यवोऽसि यवयास्मद्द्वेषोयवयारातीः ॥ दिवे
त्वान्तरिक्षाय त्वापृथिव्यैत्वा ॥ १ ॥ शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनम

सि ॥ उद्दिवꣳ स्तभानान्तरिक्षम्पृणदृꣳहस्व पृथिव्याम् ॥ २ ॥ द्युतानस्त्वा मारु
तोमिनोतु मित्रावरुणौ ध्रुवेण धर्मणा ॥ ब्रह्मवनित्वा क्षत्रवनि रायस्पोषवनिपर्यू
हामि ॥ ३ ॥ ब्रह्मदृꣳह क्षत्रन्दृꣳहायुर्दृꣳहप्रजान्दृꣳह ॥ ध्रुवासि ध्रुवोऽस्मिन्यज
मान आयतने भूयात् ॥ घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्यच्छदिरसि विश्वजन
स्यच्छाया ॥ ४ ॥ परित्वा गिर्वणोगिरइमाभवन्तु विश्वतः ॥ वृद्धायुमनुवृद्धयोजु
ष्टाभवन्तुजुष्टयः॥५॥इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽसि॥ऐन्द्रमसिवैश्वदेवमसि॥६॥७

विभूरसि प्रवाहणोवह्निरसि हव्यवाहनः ॥ श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्व
वेदाः ॥१॥ उशिगसिक विरङ्घारिरसिबम्भारिः ॥ अवस्यूरसि दुवस्वाञ्छुन्ध्यूरसि
मार्जालीयः ॥२॥ ऋतधामासि स्वर्ज्योतिस्समुद्रोऽसि विश्वव्यचाः ॥ अजोस्येक
पादहिरसिबुध्न्यः ॥ ३ ॥ सम्राळसि कृशानुः परिषद्योऽसि पवमानः ॥ नभोऽसि

प्रतक्वा मृष्टोऽसि हव्यसूदनः ॥ ४ ॥ समूढोऽसि विश्ववेदा ऊर्जा निरिकस्य प्रति
ष्ठा ॥ अग्नयस्सगरास्सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन ॥ पात माग्नयः पिपृत
माग्नयो नमो वोऽस्तु मा मा हिꣳसिष्ट ॥ ५ ॥ ८

ज्योतिरसि विश्वरूपं विश्वेषां देवानाꣳ समित् ॥ त्वꣳसोम तनूकृद्भ्यो द्वेषो
भ्योऽन्यकृतेभ्यः ॥ उरु यन्तासि वरूथꣳ स्वाहा ॥ जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥ १ ॥
अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ॥ ॥ युयोध्यस्मज्जुहुरा
णमेनो भूयिष्ठान्ते नम उक्तिं विधेम ॥ २ ॥ अयन्नो अग्निर्वरिवस्कृणोत्वयम्मृधः पुर
एतु प्रभिन्दन् ॥ अयँव्वाजाञ्जयतु वाजसाता अयꣳशत्रूञ्जयतु जर्हृषाणस्स्वाहा ॥
३ ॥ उरु विष्णो विक्रमस्वोरुक्षयाय नस्कृधि ॥ घृतं घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वा
हा ॥ ४ ॥ देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् ॥ एतत्त्वन्देव सोम

देवोदेवाँ२ऽउपागाः॥५॥इदमहम्मनुष्यान्त्सहरायस्पोषेणस्वाहानिर्वरुणस्यपाशान्मु
च्ये ॥ अग्ने व्रतपास्त्वेव्रतपाः ॥ ६ ॥ यातव तनूर्मय्यभूदेषासात्वयि यामममतनू
स्त्वय्यभूदियꣳसामयि ॥ यथायथन्नौ व्रतपते व्रतान्यनु मेदीक्षान्दीक्षापतिरमꣳ
स्तानु तपस्तपस्पतिः ॥ ७ ॥ ९

उरुविष्णो विक्रमस्वोरुक्षयाय नस्कृधि ॥ घृतङ्घृतयोने पिबप्रप्र यज्ञपतिन्तिरस्वा
हा ॥ १ ॥ अत्यन्याँ२ऽ अगान्नान्याँ२ऽ उपागाम् ॥ अर्वाक्त्वा परेभ्यः परोऽवरेभ्यः ॥
२ ॥ तन्त्वाजुषामहे देववनस्पते देवयज्यायै ॥ देवास्त्वादेवयज्यायैजुषन्ताँविष्
ष्णवेत्वा ॥ ३ ॥ ओषधे त्रायस्व स्वधिते मैनꣳहिꣳसीः ॥ दिवम्माले्खीरन्तरिक्ष
म्माहिꣳसीःपृथिव्यासम्भव ।४। अयꣳहित्वा स्वधितिस्तेतिजानःप्रणिनायमहतेसौ
भगाय ॥ अतस्त्वन्देव वनस्पते शतवल्शोविरोह सहस्रवल्शाविवयꣳरुहेम ।५।१०।

सिगमध्यै यत्र गावो भूरिशृङ्गा अयासः॥अत्राह तदुरुगायस्य विष्णोः परमम्पद
मवभारि भूरि ॥३॥ ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि॥ब्रह्म दृ॑ꣳह क्ष
त्रन्दृꣳहायुर्दृꣳह प्रजान्दृꣳह ॥४॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ॥
इन्द्रस्य युज्यस्सखा ॥५॥ तद्विष्णोः परमम्पदꣳ सदा पश्यन्ति सूरयः॥दिवीव
चक्षुराततम् ॥६॥ परि वीरसि परि त्वा दैवीर्विशो व्ययन्ताम् ॥ परीमं यजमानꣳ
रायोमनुष्याणान्दिवस्सूनुरस्येषते पृथिव्याँल्लोक आरण्यस्ते पशुः ॥७॥ १

उपावीरस्युप देवान्दैवीर्विशःप्रागुरुशिजो वह्नितमान्॥देव त्वष्टर्वसुरमहव्या
ते स्वदन्ताम् ॥१॥ रेवतीरमध्वम्बृहस्पते धारया वसूनि ॥ ऋतस्यत्वा देवहविः
पाशेन प्रतिमुञ्चामि धर्षान्मानुषः ॥ देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
म्पूष्णो हस्ताभ्याम् ॥२॥ अग्नीषोमाभ्याञ्जुष्टन्नियुनज्मि ॥ अद्भ्यस्त्वौषधीभ्य

प्रोक्षाम्यनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ॥ अग्नी
षोमाभ्यान्त्वा जुष्टम्प्रोक्षामि ॥ ३ ॥ अपाम्पेरुरस्यापो देवीस्स्वदन्तु ॥ स्वात्तं चित्स
द्देवहविः ॥४॥ सन्ते प्राणो वातेन गच्छताᳬं समङ्गानि यजत्रैः ॥ सय्यज्ञपतिरा
शिषा ॥ ५ ॥घृतेनाक्तौ पशुन्त्रायेथाᳬं रेवति यजमाने ॥ प्रियन्धा आविश ॥६॥
उरोरन्तरिक्षात्सजूर्देवेन वातेन ॥ अस्य हविषस्त्मना यज समस्य तन्वा भव ॥७॥
वर्षो वर्षीयसि यज्ञे यज्ञपतिन्धाः ॥ स्वाहा देवेभ्यो देवेभ्यस्स्वाहा ॥ माहिर्भूर्मा
पृदाकुः ॥ ८ ॥ २ ॥

नमस्त आतानानर्वा प्रेहि ॥ घृतस्य कुल्या उप ऋतस्य
पथ्या उप ॥ १ ॥ देवीरापः शुद्धा वोढ्वᳬं सुपरि विष्टा देवेषु ॥ सुपरिविष्टा वय
म्परि वेष्टारो भूयास्म ॥ २ ॥ वाचन्ते शुन्धामि प्राणन्ते शुन्धामि चक्षुस्ते शु-

षधीर्हिँसीर्धाम्नोधाम्नो राजँस्ततो वरुण नो मुञ्च ॥ यदाहुरघ्न्या इति वरुणे
ति शपामहे ततो वरुण नो मुञ्च ॥ ३ ॥ सुमित्रिया न आप ओषधयस्सन्तु
दुर्मित्रियास्तस्मै सन्तु ॥ योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः ॥ ४ ॥ इदमापः प्रव
हत यत्किञ्च दुरितम्मयि ॥ यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ ५ ॥ ५

हविष्मतीरिमा आपो हविष्माँ आविवासति ॥ हविष्मान्देवो अध्वरो ह
विष्माँ अस्तु सूर्यः ॥ १ ॥ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि ॥ इन्द्राग्न्योर्भा
गधेयीस्थ मित्रावरुणयोर्भागधेयीस्थ ॥ विश्वेषान्देवानाम्भागधेयीस्थ ॥ २ ॥ अ
मूर्या उपसूर्ये याभिर्वा सूर्यस्सह ॥ ता नो हिन्वन्त्वध्वरम् ॥ ३ ॥ ६

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ॥ ऊर्ध्वो अध्वरन्दिवि देवेषु हो
त्रा यच्छ ॥ १ ॥ सोमराजन्विश्वास्त्वम्प्रजा उपावरोह ॥ विश्वास्त्वाम्प्रजा उपावरो

हन्तु ॥ २ ॥ शृणोत्वग्निस्समिधा हवम्मे शृण्वन्त्वापो धिषणाश्च देवीः ॥ श्रो
ता ग्रावाणो विदुषो न यज्ञꣳ शृणोतु देवस्सविता हवम्मे स्वाहा ॥३॥ देवीरापो
अपान्नपाद्यो वऊर्मिर्हविष्यः ॥ इन्द्रियावान्मदिन्तमः ॥ ४ ॥ तन्देवेभ्यो देवत्रा
दात शुक्रपेभ्यः ॥ येषाम्भागस्थ स्वाहा ॥ ५ ॥ कार्षिरसि समुद्रस्य त्वा क्षित्या
उन्नयामि ॥ समापो अद्भिरग्मत समोषधीभिरोषधीः ॥ ६ ॥यमग्ने पृत्सु मर्त्यमवा
वाजेषु यञ्जनाः ॥ स यन्ता शश्वतीरिषस्स्वाहा ॥ ७ ॥ ७
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ आददे रावासि
गभीरमिमम्ध्वरङ्कृधीन्द्राय सुषूतमम् ॥ उत्तमेन पविनोर्ज्जस्वन्तम्मधुमन्तम्प
यस्वन्तम् ॥ निग्राभ्या स्थ देवश्रुतस्तर्पयत मा ॥ १ ॥ मनो मे तर्पयत वाचम्मे त
र्पयत प्राणम्मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रम्मे तर्पयत ॥ आत्मानम्मे तर्पयत प्र

जाम्मैतर्पयत पशून्मैतर्पयत गणान्मैतर्पयत गणामेमावितृषन् ॥ २ ॥ इन्द्रा
यत्वावसुमते रुद्रवत इन्द्रायत्वादित्यवते ॥ इन्द्रायत्वाभिमातिघ्ने श्येनायत्वा
सोमभृतेऽग्नयेत्वारायस्पोषदे ॥ ३ ॥ यत्तेसोमदिवि ज्योतिर्यत्पृथिव्याँय्यदुराअ
न्तरिक्षे ॥ ॥तेनास्मै यजमानायोरुराये कृध्यधि दात्रेवोचः ॥ ४ ॥ श्वात्रास्थ
वृत्रतुरोराधोगूर्ता अमृतस्य पत्नीः ॥ तादेवीर्देवत्रेमँय्यज्ञन्नयतोपहूतास्सोमस्य
पिबत ॥ ५ ॥ माभेर्मा सँविक्था ऊर्जन्धत्स्व धिषणे वीड्वीसती वीळयेथा
मूर्जन्दधाथाम् ॥ पाप्माहतोन सोमः ॥ ६ ॥ प्रागपागुदगधराक्सर्वतस्त्वादि
शआधावन्तु ॥ अम्बनिष्परसमरीर्विदाम् ॥ ७ ॥ त्वमङ्गप्रशँसिषोदेवश्श
विष्ठमर्त्यम् ॥ नत्वदन्योमघवन्नस्ति मर्डितेन्द्र ब्रवीमि तेवचः ॥ ८ ॥ ८
हरिःॐ ॥ देवस्यत्वासप्त ॥ ७ ॥ उपावीरस्यष्ट ॥ ८ ॥ नमस्तेसप्त ॥ ७॥ सन्ते

पश्च ॥ ५ ॥ समुद्रम्पश्च ॥ ५ ॥ हविष्मतीस्तिस्रः ॥ ३ ॥ हृदेत्वासत ॥ ७ ॥
देवस्यत्वाष्ट ॥ ८ ॥ अष्टानुवाकेषुपञ्चाशत् ॥ ५० ॥ इषेदेवस्यसमाःपञ्चाशत्
इतिशुक्लयजुर्वेदकाण्वसँहितापाठेषष्ठोऽध्यायः ॥ हरिःॐ

हरिःॐ ॥ वाचस्पतये पवस्व वृष्णोअꣳशुभ्याङ्गभस्तिपूतः ॥ देवोदेवेभ्यः पव
स्व येषाम्भागोऽसि मधुमतीर्न इषस्कृधि ॥ १ ॥ यत्ते सोमादाभ्यन्नाम जागृ
वि तस्मैते सोम सोमाय स्वाहा ॥ स्वाहोर्वन्तरिक्षमन्वेमि स्वाङ्कृतोऽसि विश्वे
भ्य इन्द्रियेभ्योदिव्येभ्यः पार्थिवेभ्यः ॥ २ ॥ मनस्त्वाष्टु स्वाहा त्वा स्वभवस्सू
र्याय ॥ देवेभ्यस्त्वा मरीचिपेभ्योदेवाꣳशोयस्मै त्वेळे ॥ तत्सत्यमुपरिप्लुता भ
ङ्गेन हतोसौ फट्प्राणाय त्वाव्यानायत्वा ॥ ३ ॥ १

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोमम् ॥ उरुष्य रायोवेषोयजस्व ॥ १ ॥

अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् ॥ सजूर्देवेभिरवरैः परैश्चा
न्तर्यामेमघवन्मादयस्व ॥ स्वाहोर्वन्तरिक्षमन्वेमि स्वाङ्कृतोऽसि विश्वेभ्यइन्द्रि
येभ्योदिव्येभ्यः पार्थिवेभ्यः ॥ मनस्त्वाष्टु स्वाहा त्वासुभवस्सूर्याय ॥ देवे
भ्यस्त्वा मरीचिपेभ्य उदानायत्वा ॥ २ ॥ २

आवायो भूष शुचिपाउपनस्सहस्रन्ते नियुतोविश्ववार ॥ उपोते अन्धोमद्य
मया मियस्यदेवदधिषे पूर्वपेयँव्वायवेत्वा ॥ १ ॥ इन्द्रवायू इमे सुताउपप्रयोभि
रागतम् ॥ इन्दवोवा मुशन्तिहि ॥ उपयामगृहीतोऽसि वायवइन्द्रवायुभ्यां
न्त्वैषते योनिस्सजोषोभ्यान्त्वा ॥ २ ॥ ३

अयँव्वाम्मित्रावरुणा सुतस्सोमऋतावृधा ॥ ममेदिह श्रुतँहवम् ॥ उपया
मगृहीतोऽसि मित्रावरुणाभ्यान्त्वा ॥ १ ॥ रायावयँससवाँसोमदेम हव्येनदे

वायवसेन गावः ॥ तान्धेनुम्मित्रावरुणा युवन्नोविश्वाहा धत्तमनपस्फुरन्तीम् ॥
एषते योनिर्ऋतायुभ्यान्त्वा ॥ २ ॥ ४

याबाङ्कशा मधुमत्यश्विना सूनृतावती ॥ तया यज्ञम्मिमिक्षतम् ॥ उपयाम
गृहीतोऽस्यश्विभ्यान्त्वैषते योनिर्माध्वीभ्यान्त्वा ॥ १ ॥ ५

तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदꣳस्वर्विदम् ॥ प्रतीचीनँ
वृजनन्दोहसेधुनिमाशुञ्जयन्तमनु यासुवर्धसे ॥ उपयामगृहीतोसिशण्डायत्वा ।१।
एषते योनिर्वीरताम्पाह्यपमृष्टश्शण्डोदेवास्त्वा शुक्रपाः प्रणयन्त्वनाधृष्टासि ॥
सुवीरोवीरान्प्रजनयन्परीह्यभि रायस्पोषेण यजमानम् ॥ सञ्जग्मानोदिवा पृथि
व्या शुक्रश्शुक्रशोचिषा निरस्तश्शण्डश्शुक्रस्याधिष्ठानमसि ॥ २ ॥ अच्छिन्न
स्यते देवसोम सुवीर्यस्य रायस्पोषस्य ददितारस्याम ॥ साप्रथमासꣳस्कृतिर्वि

श्ववारा सप्रथमोवरुणोमित्रोअग्निः ॥ ३ ॥ सप्रथमोबृहस्पतिश्चिकित्वाꣳस्तस्मा
इन्द्राय सुतमाजुहोत स्वाहा ॥ तृम्पन्तु होत्रा मधोर्यत्स्विष्टँय्यत्सुभृतँय्यत्स्वा
हा ॥ ४ ॥ ६

अयँव्वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरा यूरजसोविमाने ॥ इममपाꣳसङ्गमे
सूर्यस्य शिशुन्नविप्रा मतिभीरिहन्ति ॥ उपयामगृहीतोऽसि मर्कायत्वा ॥ १ ॥
मनोनयेषु हवनेषु तिग्मँव्विपश्शाच्या वनुथोद्रवन्त ॥ आयश्शर्याभिस्तुविनृम्णो
अस्याश्रीणीतादिशङ्गभस्तौ ॥ २ ॥ एषते योनिः प्रजाः पाह्यपमृष्टोमर्कोदेवा
स्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि ॥ सुप्रजाः प्रजाः प्रजनयन्परीह्यभि राय
स्पोषेण यजमानम् ॥ सञ्जग्मानोदिवा पृथिव्या मन्थी मन्थिशोचिषानिरस्तो
मर्कोमन्थिनोधिष्ठानमसि ॥ ३ ॥ अच्छिन्नस्यते देवसोम सुवीर्यस्य रायस्पोष

स्यददितारस्स्याम ॥ साप्रथमा सꣳस्कृतिर्विश्ववारा सप्रथमोवरुणोमित्रोअग्निः ॥ ४ ॥ सप्रथमोवृहस्पतिश्चिकित्वाꣳस्तस्माइन्द्राय सुतमाजुहोत स्वाहा ॥ तृम्पन्तु होत्रा मधोर्यस्स्विष्टँय्यत्सुभृतँय्यत्स्वाहा ॥ ५ ॥ ७

येदेवासोदिव्येका दशस्थ पृथिव्यामध्येका दशस्थ ॥ अप्सुक्षितोमहिनैका दशस्थ तेदेवासोयज्ञमिमञ्जुषध्वम् ॥ १ ॥ उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः ॥ पाहियज्ञम्पाहियज्ञपतिम् ॥ २ ॥ विष्णुस्त्वामिन्द्रियेण पातुविष्णुन्त्वम्पाह्यभिसवनानि पाहि ॥ सोमः पवते सोमः पवते सोमः पवते ॥ ३ ॥ अस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्मैसुन्वते यजमानायपवते ॥ इषऊर्जे पवतेऽद्भ्यओषधीभ्यः पवते द्यावापृथिवीभ्याम्पवते सुभूताय पवते ब्रह्मवर्चसाय पवते ॥ विश्वेभ्यस्त्वा देवेभ्यएषते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ४ ॥ ८

उपयामगृहीतोऽसीन्द्रायत्वा बृहद्वते वयस्वत उक्थायुवङ्गृह्णामि ॥ यत्तइन्द्र
बृहद्वयस्तस्मैत्वा विष्णवेत्वैषतेयोनिरुक्थेभ्यस्त्वा ॥ १ ॥ देवेभ्यस्त्वा देवायुवं
ङ्गृह्णामियज्ञस्यायुषे मित्रावरुणाभ्यान्त्वा देवायुवङ्गृह्णामि यज्ञस्यायुषे ॥ इन्द्रा
यत्वा देवायुवङ्गृह्णामियज्ञस्यायुषइन्द्राग्निभ्यान्त्वा देवायुवङ्गृह्णामियज्ञस्यायुषे ॥
इन्द्रायत्वा देवायुवङ्गृह्णामियज्ञस्यायुषइन्द्रावरुणाभ्यान्त्वा देवायुवङ्गृह्णामि यज्ञ
स्यायुषे ॥ इन्द्राबृहस्पतिभ्यान्त्वा देवायुवङ्गृह्णामि यज्ञस्यायुषइन्द्राविष्णुभ्या
न्त्वादेवायुवङ्गृह्णामि यज्ञस्यायुषे ॥ २ ॥ १

मूर्धानन्दिवोअरतिम्पृथिव्यावैश्वानरमृत आजातमग्निम् ॥ कविंसम्राज
मतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः ॥ १ ॥ उपयामगृहीतोऽसिध्रुवोऽसि
ध्रुवक्षितिर्ध्रुवाणान्ध्रुवतमोऽच्युतानामच्युतक्षित्तमः ॥ एषते योनिर्वैश्वानराय

त्वा ॥ २ ॥ ध्रुवन्ध्रुवेण मनसा वाचासोममवनयामि ॥ अथान इन्द्रइद्विशो

सपत्नास्समनसस्करत् ॥ ३ ॥ १०

यस्ते द्रप्सस्स्कन्दति यस्तेअꣳशुर्ग्रावच्युतोधिषणयोरुपस्थात् ॥ अध्वर्योर्वापरिवा

यःपवित्रात्तन्ते जुहोमि मनसा वषट्कृतꣳस्वाहा देवानामुत्क्रमणमसि ॥ १ ॥ ११

उपयामगृहीतोऽसि मधवेत्वोपयामगृहीतोऽसि माधवायत्वा ॥ उपयामगृ

हीतोऽसि शुक्रायत्वोपयामगृहीतोऽसि शुचयेत्वा ॥ उपयामगृहीतोऽसि नभसेत्वो

पयामगृहीतोऽसि नभस्यायत्वा ॥ उपयामगृहीतोऽसीषेत्वोपयामगृहीतोऽस्यूर्जे

त्वा ॥ उपयामगृहीतोऽसि सहसेत्वोपयामगृहीतोऽसि सहस्यायत्वा ॥ उप

यामगृहीतोऽसि तपसेत्वोपयामगृहीतोऽसि तपस्यायत्वा ॥ उपयामगृहीतोऽस्य

ꣳहसस्पतयेत्वा ॥ १ ॥ १२

इन्द्राग्नी आगतꣳसुतङ्गीर्भिर्नभोवरेण्यम् ॥ अस्यपातन्धियेषिता ॥ उपयाम
गृहीतोऽसीन्द्राग्निभ्यान्त्वैषते योनिरिन्द्राग्निभ्यान्त्वा ॥ १ ॥ १३

आघाये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ॥ येषामिन्द्रोयुवा सखा ॥
उपयामगृहीतोऽस्यग्नीन्द्राभ्यान्त्वैषते योनिरग्नीन्द्राभ्यान्त्वा ॥ १ ॥ १४

ओमासश्चर्षणीधृतोविश्वेदेवास आ गत ॥ दाश्वाꣳसोदाशुषस्सुतम् ॥ उ
पयामगृहीतोऽसिविश्वेभ्यस्त्वा देवेभ्य एषते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ १ ॥ १५

विश्वेदेवासआगत शृणुतामइमꣳहवम् ॥ एदम्बर्हिर्निषीदत ॥ उपया
मगृहीतोऽसिविश्वेभ्यस्त्वादेवेभ्य एषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ १ ॥ १६

इन्द्रमरुत्वइहपाहिसोमँय्यथाशार्यातेअपिबस्सुतस्य ॥ तवप्रणीतीतवशूरशर्मन्ना
विवासन्तिकवयस्सुयज्ञाः ॥ उपयामगृहीतोऽसीन्द्रायत्वामरुत्वतएषतेयोनिरिन्द्रा

यत्वामरुत्वते ॥ १ ॥ १७

मरुत्वन्तँवृषभँवावृधानमकवारिन्दिव्यꣳशासमिन्द्रम् ॥ विश्वासाहमवसे नूतनायोग्रꣳसहोदामिहतꣳहुवेम ॥ उपयामगृहीतोऽसीन्द्रायत्वा मरुत्वत एषते योनिरिन्द्राय त्वामरुत्वते ॥ १ ॥ १८

उपयामगृहीतोऽसि मरुताम् ॥ ओजसेत्वा ॥ १ ॥ १९

सजोषाइन्द्रसगणोमरुद्भिस्सोमंपिब वृत्रहाशूर विद्वान् ॥ जहिशत्रूꣳरपमृधोनुदस्वाथाभयङ्कृणुहि विश्वतोनः ॥ उपयामगृहीतोऽसीन्द्रायत्वा मरुत्वतएषते योनिरिन्द्रायत्वा मरुत्वते ॥ १ ॥ २०

महाँꣳइन्द्रो नृवदाचर्षणि प्राउतद्विबर्हा अमिनस्सहोभिः ॥ अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुस्सुकृतः कर्तृभिर्भूत् ॥ उपयामगृहीतोसि महेन्द्रायत्वैषतेयोनि

महेन्द्रायत्वा ॥ १ ॥ २१

महाँ२इन्द्रोय ओजसा पर्जन्योवृष्टिमाँ२इव ॥ स्तोमैर्वत्सस्य वावृधे ॥ उ
पयामगृहीतोऽसि महेन्द्राय त्वैषते योनिर्महेन्द्रायत्वा ॥ १ ॥ २२ ॥हरिःॐ ॥
वाचस्पतयेतिस्रः ॥ ३ ॥ उपयामगृहीतोऽसि ॥ २ ॥ आवायो ॥ २ ॥ अयँ्वां
इन्द्रे ॥ २ ॥ यावामेका ॥ १ ॥ तम्प्रत्नथाचतस्रः ॥ ४ ॥ अयँ्वेनःपञ्च ॥ ५ ॥ येदे
वासश्चतस्रः ॥ ४ ॥ इन्द्रायत्वाष्टे ॥ २ ॥ मूर्धानन्तिस्रः ॥ ३ ॥ यस्ते ॥ १ ॥ मघवे ॥ १ ॥
इन्द्राग्नीआगतम् ॥ १ ॥ आघाये ॥ १ ॥ ओमासश्चर्षणीधृतः ॥ १ ॥ विश्वेदेवा
सः ॥ १ ॥ इन्द्रमरुत्वः ॥ १ ॥ मरुत्वन्तँ्वृषभम् ॥ १ ॥ सजातमोजसे ॥ १ ॥
सजोषाइन्द्र ॥ १ ॥ महाँइन्द्रः ॥ १ ॥ महाँइन्द्रइत्येकैका ॥ १ ॥ द्वाविंशत्यनुवाकेषु
चत्वारिँशत् ॥ ४० ॥ इतिशुक्लयजुर्वेदकाण्वसंहितापाठेसप्तमोऽध्यायः ॥ हरिःॐ

हरिः ॐ ॥ कदाचनस्तरीरसि नेन्द्रसश्चसि दाशुषे ॥ उपोपेन्नुमघवन्भूयइन्नुते दानन्देवस्य पृच्यतआदित्येभ्यस्त्वा ॥ १ ॥ कदाचनप्रयुच्छस्युभे निपासि जन्मनी ॥ तुरीयादित्य सवनन्तइन्द्रियमातस्था अमृतन्दिव्यादित्येभ्यस्त्वा ॥ २ ॥ यज्ञोदेवानाम्प्रत्येति सुम्नमादित्यासोभवता मृळयन्तः ॥ आवोर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्यावरिवोवित्तरासदादित्येभ्यस्त्वा ॥ विवस्वँ२आदित्यैषते सोमपीथस्तस्मिन्मत्स्व ॥ ३ ॥ १

भद्रस्मैनरोवर्चसे दधातनयदाशीर्दा दम्पती वाममश्नुतः ॥ पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृहे ॥ १ ॥ २

वाममद्यसवितर्वाममुश्वोदिवेदिवे वाममस्मभ्यꣳसावीः ॥ वामस्य हि क्षयस्य देवभूरे रयाधियावामभाजस्स्याम ॥ १ ॥ ३

उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोमयि धेहि ॥ जिन्व यज्ञञ्जिन्व
यज्ञपतिम्भगायसवित्रेत्वा ॥ १ ॥ ४

उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानोबृहदुक्षाय नमः ॥ विश्वेभ्यस्त्वा
देवेभ्य एषते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ १ ॥ ५

उपयामगृहीतोऽसि बृहस्पतिसुतस्य ते देवसोम ॥ इन्द्रइन्द्रियावतः पत्नी
वतोग्रहाँ२ऋध्यासम् ॥ १ ॥ अहम्परस्तादहमवस्ताद्यदन्तरिक्षन्तदुमे पितास॥
अहꣳसूर्यमुभयतो ददर्शाहन्देवानाम्परमङ्गुहायत् ॥ २ ॥ अग्ने वाक्पत्नि सजू
र्देवेनत्वष्ट्रा ॥ सोमम्पिबस्वाहा ॥ ३ ॥ प्रजापतिर्वृषासि रेतोधारेतोमयिधेहि ॥
प्रजापतेस्तेवृष्णोरेतोधसोरेतोधामशीय ॥ ४ ॥ ६

उपयामगृहीतोऽसि हरिरसिहारियोजनोहरिभ्यान्त्वा ॥ हर्योर्धानास्थ सहसो

मा इन्द्राय ॥ १ ॥ यस्तै देव सोमाश्वसनिर्भक्षोयोगोसनिः ॥ तस्यंत इष्टयं जुष
स्स्तुतस्तोमस्य शस्तोक्थस्योपहूतउपहूतस्य भक्षयामि ॥ २ ॥ ७

युक्ष्वाहि केशिना हरी वृषणा कक्ष्यप्रा ॥ अथा नइन्द्र सोमपा गिरामुपश्रु
तिञ्चर ॥ उपयामगृहीतोऽसीन्द्राय त्वा षोळशिने एषते योनिरिन्द्राय त्वा षो
ळशिने ॥ १ ॥ ८

आतिष्ठ वृत्रहन्रथँयुक्ताते ब्रह्मणा हरी ॥ अर्वाचीनंसुते मनोग्रावा कृणो
तु वग्नुना ॥ उपयामगृहीतोऽसीन्द्राय त्वा षोळशिने एषते योनिरिन्द्रायत्वा
षोळशिने ॥ १ ॥ ९

इन्द्रामिद्धरी वहतोप्रतिधृष्टशवसम् ॥ ऋषीणाञ्चस्तुतीरुप यज्ञञ्च मानुषा
णाम् ॥ उपयामगृहीतोऽसीन्द्राय त्वा षोळशिने एषते योनिरिन्द्राय त्वा षोळ

शिने ॥ १ ॥ १०

यस्मान्न जातःपरोअन्योअस्ति यआविवेश भुवनानिविश्वा ॥ प्रजापतिःप्र
जयासꣳरराणस्त्रीणिज्योतीꣳषि सचते सषोडशी ॥ १ ॥ इन्द्रश्च सम्राड्वरुण
श्चराजा तौते भक्षञ्चक्रतुरग्रएतम् ॥ तयोरहमनु भक्षम्भक्षयामिवाग्देवी जुषा
णासोमस्य तृप्यतु सहप्राणेन स्वाहा ॥ २ ॥ ११

अग्नआयूꣳषि पवस आसुवोर्जमिषञ्चनः ॥ आरेबाधस्व दुच्छुनाम् ॥ उ
पयामगृहीतोऽस्यग्नये त्वा वर्चस एषते योनिरग्नये त्वावर्चसे ॥ अग्ने वर्चस्वन्व
र्चस्वाꣳस्त्वन्देवेष्वसि ॥ वर्चस्वानहम्मनुष्येषु भूयासम् ॥ १ ॥ १२

अग्ने पवस्व स्वपा अस्मे वर्चःसुवीर्यम् ॥ दधद्रयिम्मयि पोषम् ॥ उपया
मगृहीतोऽस्यग्नये त्वावर्चस एषतेयोनिरग्नये त्वावर्चसे ॥ अग्ने वर्चस्वन्वर्चस्वाꣳ

स्त्वन्देवेष्वसि ॥ वर्चस्वानहम्मनुष्येषु भूयासम् ॥ १ ॥ १३

उत्तिष्ठन्नोजसा सह पीत्वी शिप्रेअवेपयः ॥ सोममिन्द्र चमूसुतम् ॥ उप यामगृहीतोऽसीन्द्राय त्वौजस एषते योनिरिन्द्राय त्वौजसे ॥ इन्द्रौजस्वन्नोज स्वाᳪंस्त्वन्देवेष्वसि ॥ ओजस्वानहम्मनुष्येषु भूयासम् ॥ १ ॥ १४

अदृश्रमस्य केतवोविरश्मयोजनाँ२अनु ॥ भ्राजन्तोअग्नयोयथा ॥ उपया मगृहीतोऽसि सूर्यायत्वा भ्राज एषते योनिस्सूर्यायत्वा भ्राजे ॥ सूर्य भ्राजस्व न्भ्राजस्वाᳪंस्त्वन्देवेष्वासि ॥ भ्राजस्वानहम्मनुष्येषुभूयासम् ॥ १ ॥ १५

उदुत्यञ्जातवेदसन्देवँव्वहन्ति केतवः ॥ दृशे विश्वाय सूर्यम् ॥ उपयाम गृहीतोऽसि सूर्यायत्वा भ्राज एषते योनिस्सूर्यायत्वा भ्राजे ॥ सूयभ्राजस्वन्भ्रा जस्वाᳪंस्त्वन्देवेष्वसि ॥ भ्राजस्वानहम्मनुष्येषु भूयासम् ॥ १ ॥ १६

चित्रन्देवानामुद्गादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ आप्राद्यावापृथिवी अ
न्तरिक्षꣳसूर्य आत्मा जगतस्तस्थुषश्च ॥ उपयामगृहीतोऽसि सूर्यायत्वा भ्राज
एषते योनिस्सूर्यायत्वा भ्राजे ॥ सूर्य भ्राजस्वन्भ्राजस्वाꣳस्त्वन्देवेष्वसि ॥ भ्रा
जस्वानहम्मनुष्येषुभूयासम् ॥ १ ॥ १७

विन्न इन्द्र मृधोजहिनीचा यच्छ पृतन्यतः ॥ योअस्माँ२अभिदा सत्यधरङ्ग
मया तमः ॥ उपयामगृहीतोऽसीन्द्रायत्वा विमृध एषते योनिरिन्द्रायत्वा वि
मृधे ॥ १ ॥ १८

वाचस्पतिँ᳘विश्वकर्माणमूतये मनोजुवँ᳘वाजे अद्याहुवेम ॥ सनोविश्वानिह
वनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ॥ उपयामगृहीतोऽसीन्द्रायत्वा विश्वक
र्मण एषते योनिरिन्द्रायत्वा विश्वकर्मणे ॥ १ ॥ १९

विश्वकर्मन्हविषा वावृधानस्स्वयँय्यजस्व पृथिवीमुतद्याम् ॥ मुह्यन्त्वन्ये अभितंस्सपत्ना इहास्माकम्मघवा सूरिरस्तु ॥ उपयामगृहीतोऽसीन्द्रायत्वा विश्वकर्मण एषते योनिरिन्द्रायत्वा विश्वकर्मणे ॥ १ ॥ २०

विश्वकर्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरयुध्यम् ॥ तस्मै विशस्समनमन्तपूर्वीरयमुग्रोविहव्योयथासत् ॥ उपयामगृहीतोऽसीन्द्रायत्वा विश्वकर्मणए षते योनिरिन्द्रायत्वा विश्वकर्मणे ॥ १ ॥ २१

उपयामगृहीतोऽस्यग्नये त्वागायत्रच्छन्दसङ्गृह्णामीन्द्रायत्वा त्रिष्टुप्च्छन्दसङ्गृह्णामि ॥ विश्वेभ्यस्त्वा देवेभ्योजगच्छन्दसङ्गृह्णाम्यनुष्टुप्तेऽभिगरः ॥ १ ॥ व्रेशीनान्त्वा पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि भन्दनानान्त्वा पत्मन्नाधूनोमि मध्वन्तमानान्त्वापत्मन्नाधूनोमि ॥ शुक्रन्त्वा शुक्रआधूनोम्यह्नोरूपे सू

यैस्य रश्मिषु ॥ २ ॥ ककुहꣳरूपँवृषभस्यरोचते बृहत्सोमस्सोमस्य पुरोगाश्शु
क्रश्शुक्रस्य पुरोगाः ॥ यत्ते सोमादाभ्यन्नाम जागृवितस्मैत्वा गृह्णामि तस्मैते
सोमसोमाय स्वाहा ॥ ३ ॥ उशिक्त्वन्देव सोमाग्नेः प्रियम्पाथोपीहि वशीत्व
न्देव सोमेन्द्रस्य प्रियम्पाथोपीहि ॥ अस्मत्सखा त्वन्देव सोम विश्वेषान्देवा
नाम्प्रियम्पाथोपीहि ॥ ४ ॥ २२ हरिःॐ

कदाचनातिस्त्रः ॥ ३ ॥ श्रदस्मै ॥ १ ॥ वाममद्य ॥ १ ॥ सावित्रः ॥ १ ॥ सुश
मेत्येकैका ॥ १ ॥ बृहस्पतिचतस्त्रः ॥ ४ ॥ हरिरसिद्वे ॥ २ ॥ युक्ष्वाहि ॥ १ ॥
आतिष्ठ ॥ १ ॥ इन्द्रमित्येकैका ॥ १ ॥ यस्मान्नजातइतिद्वे ॥ २ ॥ अग्नआयूꣳषि
॥ १ ॥ अग्नेपवस्व ॥ १ ॥ उत्तिष्ठन् ॥ १ ॥ अदृश्रम् ॥ १ ॥ उदुत्यम् ॥ १ ॥ चि
त्रम् ॥ १ ॥ विनः ॥ १ ॥ वाचस्पतिम् ॥ १ ॥ विश्वकर्मन् ॥ १ ॥ विश्वकर्मन्नि

त्येकैका ॥ १ ॥ अग्नयेत्वाचतस्त्रः ॥ ४ ॥ द्वाविꣳशत्यनुवाकेषुद्वात्रिꣳशत् ॥ ३२ ॥ शुक्लयजुर्वेदकाण्वसँहितापाठेअष्टमोऽध्यायः ॥ हरिःॐ

हरिःॐ प्राणाय मे वर्चोदावर्चसे पवस्व व्यानाय मेवर्चोदा वर्चसे पवस्व ॥ उदानाय मेवर्चोदावर्चसे पवस्व वाचेमे वर्चोदावर्चसे पवस्व ॥ १ ॥ क्रतूदक्षाभ्याम्मे वर्चोदावर्चसे पवस्व श्रोत्रायमे वर्चोदावर्चसे पवस्व ॥ चक्षुर्भ्याम्मेव र्चोदसौवर्चसे पवेथाम् ॥ २ ॥ आत्मने मेवर्चोदावर्चसे पवस्वौजसे मेवर्चोदा वर्चसे पवस्वायुषे मेवर्चोदावर्चसे पवस्व ॥ विश्वाभ्योमे प्रजाभ्योवर्चोदसौ व र्चसेपवेथाम् ॥ ३ ॥ कोऽसि कतमोऽसि कस्यासि कोनामासि ॥ यस्यते नामामन्महियन्त्वासोमेनातीतृपाम ॥ ४ ॥ भूर्भुवस्वस्सुप्रजाः प्रजया भूयासम् ॥ सुवीरोवीरैस्सुपोषः पोषैः ॥ ५ ॥ १

उदुत्यञ्जातवेदसन्देवँव्वहन्ति केतवः॥ दृशेविश्वायसूर्यम् ॥ १ ॥ चित्रन्देवाना
मुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ आप्राद्यावापृथिवी अन्तरिक्षँसूर्य आ
त्मा जगतस्तस्थुषश्च ॥ २ ॥ अग्नेनय सुपथाराये अस्मान्विश्वानि देव वयुना
नि विद्वान् ॥ युयोध्यस्मज्जुहु राणमेनोभूयिष्ठान्तेनम उक्तिँव्विधेम ॥ ३ ॥ अय
न्नोअग्निर्वरिवस्कृणोत्वयम्मृधः पुरएतु प्रभिन्दन् ॥ अयँव्वाजाञ्जयतु वाजसाता
अयँशत्रूञ्जयतुजर्हृषाणस्वाहा ॥ ४ ॥ रूपेणवोरूपमभ्यागान्तुथोवोविश्ववेदा
विभजतु ॥ ऋतस्यपथाप्रेत चन्द्र दक्षिणाः ॥ ५ ॥ विस्वः पश्यव्यन्तरिक्षँय्य
तस्व सदस्यैः ॥ ब्राह्मणमद्यविदेय पितृमन्तम्पैतृमत्यमृषिमार्षेयँसुधातु द
क्षिणम् ॥ ६ ॥ अस्मद्राता देवत्रा गच्छप्रदातारमाविश ॥ अग्नयेत्वामह्यँव्वरु
णोददातु सोऽमृतत्वमश्याम् ॥ ७ ॥ आयुर्दात्रएधि मयोमह्यम्प्रतिग्रहीत्रे ॥ रु

द्रायत्वा मह्यँव्वरुणोददातु सोऽमृतत्वमश्यात् ॥ प्राणोदात्र एधि मयोमह्यम्प्रतिग्रहीत्रे ॥ बृहस्पतयेत्वा मह्यँव्वरुणोददातु सोऽमृतत्वमश्यात् ॥ त्वग्दात्र एधिमयोमह्यम्प्रतिग्रहीत्रे ॥ यमायत्वा मह्यँव्वरुणोददातुसोऽमृतत्वमश्यात् ॥ वयोदात्र एधि मयोमह्यम्प्रतिग्रहीत्रे ॥ ८ ॥ कोऽदात्कस्मा अदात्कामोऽदात्कामायादात् ॥ कामोदाता कामः प्रतिग्रहीता कामैतत्ते तर्वकाम सता भुनजामहे ॥ ९ ॥ २

समिन्द्रणोमनसा नेषिगोभिस्सꣳसूरिभिर्मघवन्त्सꣳस्वस्त्या ॥ सम्ब्रह्मणादेवकृतँय्यदस्ति सन्देवानाꣳसुमतौ यज्ञियानाम् ॥ १ ॥ सँव्वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन ॥ त्वष्टा सुदत्रोविदधातु रायोनु मार्ष्टु तन्वो यद्विलिष्टम् ॥ २ ॥ धातारातिस्सवितेदञ्जुषन्ताम्प्रजापतिर्निधिपा देवोअग्निः ॥

त्वष्टाविष्णुः प्रजया सꣳरराणोयजमानाय द्रविणन्दधातु ॥ ३ ॥ सुगावोदेवा
स्सदना अकर्मय आजग्मेदꣳसवनञ्जुषाणाः ॥ भरमाणा वहमाना हवीꣳष्य
स्मे धत्त वसवोवसूनि ॥ ४ ॥ याँ२आवह उशतोदेव देवाꣳस्तान्प्रेरयस्वे अग्ने
सधस्थे ॥ जक्षिवाꣳसःपपिवाꣳसश्च विश्वेसुधर्मꣳस्वरातिष्ठतानु ॥ ५ ॥ वय
ꣳहिल्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ॥ ऋधगया ऋधगुताशमि
ष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान् ॥ ६ ॥ देवागातुविदोगातुमित्वा गातुमित ॥
मनसस्पत इमन्देव यज्ञꣳस्वाहा वाते धाः ॥ ७ ॥ यज्ञयज्ञङ्गच्छ यज्ञपतिङ्गच्छ
स्वाँय्योनिङ्गच्छ स्वाहा ॥ एषते यज्ञोयज्ञपते सहसूक्तवाकस्सर्ववीरस्तञ्जुषस्व
स्वाहा ॥ ॥ ८ ॥ ३

माहिर्भूर्मापृदाकुः ॥ उरुꣳहिराजावरुणश्चकारसूर्यायपन्थामन्वेतवाउ॥अपदेपादा

प्रतिधातवेकरुतापवक्काहृदयाविधश्चित् ॥ नमोवरुणायाभिष्ठितोवरुणस्यपाशः ॥१॥
अग्नेरनीकमप आविवेशापान्नपात्प्रति रक्षन्न सुर्यम् ॥ दमेदमे समिधंय्यक्ष्यग्ने
प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहा ॥ २ ॥ समुद्रे ते हृदयमप्स्वन्तस्सन्त्वावि
शन्त्वोषधीरुतापः ॥ यज्ञस्यत्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहा ॥
३ ॥ देवीराप एषवोगर्भस्तꣳसुप्रीतꣳसुभृतम्बिभृत ॥ देवसोमैषते लोकः
परिच वक्षि शञ्चवक्षि ॥ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुण ॥ अवदेवैर्दे
वकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतम्पुरुराव्णोदेव रिषस्पाहि ॥ देवानाꣳसमि
दसि ॥ ४ ॥ ४

एजतु दशमास्योगर्भोजरायुणा सह ॥ यथायँव्वायुरेजति यथासमुद्र एज
त्येवायन्दशमास्योअस्त्रज्जरायुणा सह ॥ १ ॥ यस्यास्ते यज्ञियोगर्भोयस्यायो

निर्हिरण्ययी ॥ अङ्गान्यहुता यस्य तम्मात्रा समजगिमᳫ्स्वाहा ॥ २ ॥ पुरुद्स्मोविषुरूप इन्दुरन्तर्महिमानमानञ्ज धीरः ॥ एकपदीन्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानु प्रथन्ताᳫ्स्वाहा ॥ ३ ॥ मरुतोयस्य हिक्षये पाथादिवो विमहसः ॥ ससुगोपातमोजनः ॥ ४ ॥ महीद्यौः पृथिवी चन इमँय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ५ ॥ ५

आजिघ्र कलशम्महात्वा विशन्त्विन्दवः ॥ पुनरूर्जा निवर्तस्व सानस्सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः ॥ १ ॥ हव्ये काम्यइळे रन्ते चन्द्रे ज्योतेदिते सरस्वति महि विश्रुति ॥ एताते अघ्न्ये नामानि देवेषु मासुकृतम्ब्रूतात् ॥ २ ॥ इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिस्स्वाहा ॥ उपसृजन्धरुणम्मात्रे धरुणोमातरन्धयन्रायस्पोषमस्मासु दीधरत्स्वाहा ॥ ३ ॥ अग्

न्मज्योतिरमृता अभूम दिवंपृथिव्या अध्यारुहाम ॥ अविदाम देवान्त्स्वर्ज्योतिः ॥ ४ ॥ युवन्तामिन्द्रा पर्वता पुरोयुधा योनःपृतन्या दपतन्तमिद्धंतँव्वज्रेण तन्तमिद्धंतम् ॥ दूरे चत्तायच्छन्त्सद्गहनँय्यदिनक्षदस्माकँशत्रून्परिशूर विश्वतोदर्मा दर्शीष्ट विश्वतः ॥ ५ ॥ भूर्भुवस्स्वस्सुप्रजाः प्रजया भूयासम् ॥ सुवीरोवीरैस्सुपोषः पोषैः ॥ ६ ॥ ६

परमेष्ठ्यभिधीतः प्रजापतिर्वाचिव्याहृतायामन्धो अच्छेतस्सवितासन्याम् ॥ विश्वकर्मा दीक्षायाम्पूषासोमक्रयण्याम् ॥ १ ॥ इन्द्रश्च मरुतश्च क्रया योपोत्थितः ॥ असुरः पण्यमानोमित्रःक्रीतः ॥ २ ॥ विष्णुश्शिपिविष्ट ऊरा आसन्नोविष्णुर्नरन्धिषः प्रोह्यमाणः ॥ सोमआगतोवरुण आसन्द्यामासन्नः ॥ ३ ॥ अग्निराग्नीध्र इन्द्रोहविर्धाने ॥ अथर्वोपावह्रियमाणो विश्वे देवा अंशुषुन्युप्य

मानेषु ॥ ४ ॥ विष्णुराप्रीतपाआप्याय्यमानोयमस्सूयमानो विष्णुस्सम्भ्रियमा
णः ॥ वायुः पूय मानश्शुक्रःपूतः ॥ ५ ॥ शुक्रःक्षीरश्रीर्मन्थीसक्तश्रीः ॥ वि
श्वे देवाश्चमसेषून्नीतो सुहोमायोद्यतः ॥ ६ ॥ रुद्रो हूयमानो वातोऽभ्यावृत्तो
नृचक्षाःप्रतिख्यातो भक्षः पीतः पितरो नाराशꣳसास्साद्यमानः ॥ सिन्धुरवभृथा
योद्यतस्समुद्रोऽभ्यवह्रियमाणस्सलिलःप्रप्लुतः ॥ ७ ॥ ययोरोजसा स्कभिता रजा
ꣳसि वीर्येभिर्वीरतं माशविष्ठा ॥ यापत्येते अप्रतीतासहोभिर्विष्णू अगन्वरुणा
पूर्वहूतौ ॥ ८ ॥ देवान्दिव मगन्यज्ञस्ततोमाद्रविणमष्टुमनुष्यानन्तरिक्षमगन्य
ज्ञस्ततोमाद्रविणमष्टु ॥ पितॄन्पृथिवी मगन्यज्ञस्ततोमाद्रविणमष्टुयङ्कञ्च लोकमग
न्यज्ञस्ततोमे भद्रमभूत् ॥ ९ ॥ ७ हरिःॐ

प्राणायमेपश्च ॥ ५ ॥ उदुत्यन्नव ॥ ९ ॥ समिन्द्रणोऽष्ट ॥ ८ ॥ माहिश्वत

स्त्रः ॥ ४ ॥ एजतुदशमास्यःपञ्च ॥ ५ ॥ आजिघ्रषट् ॥ ६ ॥ परमेष्ठीनव ॥ ९ ॥
सप्तानुवाकेषुषट्चत्वारिꣳशत् ॥४६॥ प्राणावाज होतायज्जाषट्चत्वारिꣳशत् ॥४६॥

इतिशुक्लयजुर्वेदकाण्वसँहितापाठेनवमोऽध्यायः ॥ हरिःॐ

हरिःॐ ॥ देव सवितः प्रसुव यज्ञम्प्रसुवेमम्भगाय ॥ दिव्योगन्धर्वः केतपाः केतन्नः पुनातु वाचस्पतिर्नोअद्यवाजꣳस्वदतु ॥ १ ॥ ध्रुवसदन्त्वा नृषदम्मनस्सदम् ॥ उपयामगृहीतोऽसीन्द्रायत्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम् ॥ २ ॥ अप्सुषदन्त्वा घृतसदँव्योमसदम् ॥ उपयामगृहीतोऽसीन्द्रायत्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम् ॥ पृथिवि सदन्त्वान्तरिक्षसदन्दिविसदन्देव सदन्नाकसदम् ॥ उपयामगृहीतोऽसीन्द्रायत्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम् ॥ ३ ॥ अपाꣳरसमुद्वयसꣳसूर्ये सन्तꣳसमा

हितम् ॥ अपाᳬंरसंस्यवयो रसस्तँव्वो गृह्णाम्युत्तमम् ॥ उपयामगृहीतोऽसीन्द्रा
यत्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम् ॥ ४ ॥ ग्रहा ऊर्जाहुतयो
व्यन्तोविप्राय मतिम् ॥ तेषाँव्विशिप्रियाणाँव्वोहमिषमूर्जᳬंसमग्रभम् ॥ उप
यामगृहीतोऽसीन्द्रायत्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम् ॥ ५ ॥
सम्पृचस्थ सम्मा भद्रेण पृङ्क्त ॥ विपृचस्थविमापापेनपृङ्क्त ॥ ६ ॥ १

इन्द्रस्य वज्रोऽसि वाजसास्त्वयायँव्वाजᳬंसेत् ॥ वाजस्य नु प्रसवे मातरम्म
ही मदितिन्नाम वचसा करामहे ॥ यस्यामिदँव्विश्वम्भुवनमाविवेश तस्यान्नो
देवस्सविता धर्म साविषक् ॥ १ ॥ देवीरापो आपान्नपाद्योवे ऊर्मिः प्रतूर्तिः ॥ क
कुन्मान्वाजसास्तेनायँव्वाजᳬंसेत् ॥ २ ॥ अप्स्वन्तरमृतमप्सु भेषजमपामुत प्र
शस्तिभिः ॥ अश्वाभवत वाजिनः ॥ ३ ॥ वातोवावो मनोवागन्धर्वास्सप्तविᳬंश

तिः ॥ ते अग्रेश्वमयुञ्जँस्ते अस्मिञ्जवमादधुः ॥ ४ ॥ वातरँहा भव वाजि
न्युज्यमान इन्द्रस्येवदक्षिणः श्रियैधि ॥ युञ्जन्तु त्वा मरुतोविश्ववेदस आते
त्वष्टा पत्सु जवन्दधातु ॥ ५ ॥ जवोयस्ते वाजिन्निहितोगुहायश्श्येने परीतोअ
चरच्च वाते ॥ तेन नोवाजिन्बलवान्बलेन वाजजिच्चैधि समने चपारयिष्णुः ॥ ६ ॥
वाजिनोवाजजितोवाजँसरिष्यन्तः ॥ बृहस्पतेर्भागमव जिघ्रत ॥ ७ ॥ २
देवस्य वयँसवितुस्सवे सत्यसवसः ॥ बृहस्पतेरुत्तमन्नाकँरुहेमेन्द्रस्योत्त
मन्नाकँरुहेम ॥ देवस्य वयँसवितुस्सवे सत्यसवसः ॥ बृहस्पतेरुत्तमन्ना
कमरुहामेन्द्रस्योत्तमन्नाकमरुहाम ॥ १ ॥ बृहस्पते वाजञ्जय बृहस्पतये वाँचं
व्वदत ॥ बृहस्पतिँव्वाजञ्जापयत ॥ २ ॥ इन्द्रवाजञ्जयेन्द्रायवाँचंव्वदत ॥
इन्द्रँव्वाजञ्जापयत ॥ ३ ॥ एषा वस्सा सत्या सँव्वाग् भूद्यया बृहस्पतिँव्वाज

मजीजपत ॥ अजीजपत बृहस्पतिँवाचँवनस्पतयोविमुच्यध्वम् ॥ ४ ॥ देवस्य
वयꣳ सवितुस्सवे सत्यसवसः ॥ बृहस्पतेर्वाजजितो वाजञ्जेष्म ॥ ५ ॥ वाजि
नो वाजञ्जयताध्वनस्स्कभ्नन्तः ॥ योजनामिमानाः काष्ठाङ्गच्छत ॥ ६ ॥ एषस्य
वाजी क्षिपणिन्तुरण्यति ग्रीवायाम्बद्धो अपिकक्ष आसनि ॥ क्रतुन्दधिक्रा अ
नु सन्तवीत्वत्पथामङ्काꣳस्यन्वा पनीफणत् ॥ ७ ॥ उतस्मास्य द्रवतस्तुरण्य
तः पर्णन्न वेरनु वाति प्रगर्धिनः ॥ श्येनस्येवध्रजतो अङ्कसम्परि दधिक्राव्णस्स
होर्ज्जा तारित्रतः ॥ ८ ॥ शन्नोभवन्तु वाजिनोहवेषु देवताता मितद्रवस्स्वर्काः ॥
जम्भयन्तोऽहिँवृकꣳरक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः ॥ ९ ॥ तेनो अर्वन्तोह
वनश्रुतो हवँविश्वेशृण्वन्तु वाजिनो मितद्रवः ॥ सहस्रसा मेधसाता इवत्मना
महोयेधनꣳसमिथेषु जभ्रिरे ॥ १० ॥ वाजेवाजेवत वाजिनोनोधनेषु विप्राअमृता

ऋतज्ञाः ॥ अस्यमध्वः पिबत मादयध्वन्तृप्तायातपथिभिर्देव यानैः ॥ ११॥ आ
मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे ॥ आमा गन्ताम्पितरा
मातरा युवमामा सोमो अमृतत्वाय गम्यात् ॥ १२ ॥ वाजिनो वाजजितो वा
जꣳसस्रुवाꣳसः ॥ बृहस्पतेर्भागमव जिघ्रत निमृजानाः ॥ १३ ॥ ३

आपये स्वाहा स्वापये स्वाहा पिजायस्वाहा क्रतवे स्वाहा ॥ वसवे स्वाहा
हर्पतये स्वाहा ॥ अह्नेमुग्धायस्वाहा मुग्धाय वैनꣳशिनायस्वाहा विनꣳशिन आ
न्त्यायनाय स्वाहान्त्याय भौवनायस्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा॥
१ ॥ आयुर्यज्ञेन कल्पताम्प्राणो यज्ञेन कल्पताञ्चक्षुर्यज्ञेन कल्पताꣳश्रोत्रँयज्ञेन
कल्पताम् ॥ पृष्ठँयज्ञेन कल्पताँयज्ञोयज्ञेनकल्पताम् ॥ २ ॥ जायएहि स्वोरोहा
व ॥ प्रजापतेः प्रजाअभूम स्वर्देवा अगन्मामृताअभूम ॥ ३ ॥ अस्मेवोअस्त्व

न्द्रियमस्मे नृम्णमुतक्रतुः ॥ अस्मेवर्चाꣳसि सन्तुवः ॥ ४ ॥ नमोमात्रे पृथि
व्या इयन्तेराडयन्तासि यमनः ॥ ध्रुवोऽसिधरुणः कृष्यैक्षेमायरय्यै पोषाय ॥ ५ ॥४

वाजस्येमम्प्रसवस्सुषुवेऽग्रेसोमꣳराजानमोषधीष्वप्सु ॥ ताअस्मभ्यम्मधुम
तीर्भवन्तु वयꣳराष्ट्रे जागृयाम पुरोहिताः ॥ १ ॥ वाजस्येदम्प्रसव आबभूवेमा
च विश्वा भुवनानि सर्वतः ॥ सनेमि राजा परियाति विद्वान्प्रजाम्पुष्टिँव्वर्धयमा
नोअस्मे ॥ २ ॥ वाजस्येमाम्प्रसवश्शिश्रिये दिवमिमाच विश्वाभुवनानि सम्रा
ट् ॥ अदित्सन्तन्दापयति प्रजानन्त्सनो रयिꣳसर्ववीरन्नि यच्छतु ॥ ३ ॥ अ
ग्ने अच्छावदेहनः प्रतिनस्सुमना भव ॥ प्रनोयच्छ सहस्राजित्त्वꣳहिधनदा अ
सि ॥ ४ ॥ सोमꣳराजानमवसेऽग्निमन्वारभामहे ॥ आदित्याँव्विष्णुꣳसूर्यम्ब्र
ह्माणञ्च बृहस्पतिम् ॥ ५ ॥ प्रनोयच्छत्वर्यमा प्रपूषा प्रसरस्वती ॥ प्रवाग्देवी

ददातुनः ॥ ६ ॥ अर्यमणम्बृहस्पतिमिन्द्रन्दानाय चोदय ॥ वाचँविष्णुꣳ सरस्वतीꣳसवितारञ्च वाजिनम् ॥७॥ देवस्यत्वा सवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यै वाचोयन्तुर्यै तुर्यन्दधामि ॥ बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि ॥ ८ ॥ ५

अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषमाश्विनौ द्व्यक्षरेण द्विपदोमनुष्यानुदजयतान्तानुज्जेषम् ॥ विष्णुस्त्र्यक्षरेण त्रीनिमाँल्लोकानुदजयत्तानुज्जेषꣳसोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्तानुज्जेषम् ॥ १ ॥ पूषापञ्चाक्षरेण पञ्च ऋतूनुदजयत्तानुज्जेषꣳसविता षळक्षरेण षळृतूनुदजयत्तानुज्जेषम् ॥ मरुतस्सप्ताक्षरेण सप्तग्राम्यान्पशूनुदजयꣳस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण गायत्री मुदजयत्तामुज्जेषम् ॥ २ ॥ मित्रोनवाक्षरेण त्रिवृतꣳस्तोममुदजयत्तमुज्जेषँवरुणोदशा

क्षरेण विराजमुदजयत्तामुज्जैषम् ॥इन्द्रएकादशाक्षरेण त्रिष्टुभमुदजयत्तामुज्जै
षँव्विश्वे देवाद्वादशाक्षरेण जगतीमुदजयꣳस्तामुज्जैषम् ॥ ३ ॥ वसवस्त्रयोदशा
क्षरेण त्रयोदशꣳस्तोममुदजयꣳस्तमुज्जैषꣳरुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳस्तोममु
दजयꣳस्तमुज्जैषम् ॥ आदित्याःपञ्चदशाक्षरेण पञ्चदशꣳस्तोममुदजयꣳस्तमुज्जै
षमादितिष्षोळशाक्षरेण षोळशꣳस्तोममुदजयत्तमुज्जैषम् ॥ प्रजापतिस्सप्तद
शाक्षरेण सप्तदशꣳस्तोममुदजयत्तमुज्जैषम् ॥ ४ ॥ ६ ॥हरिःॐ

देवसवितषट् ॥ ६ ॥ इन्द्रस्यवज्ररसप्त ॥ ७ ॥ देवस्यवयन्त्रयोदश ॥ १३ ॥
आपयेपञ्च ॥ ५ ॥ वाजस्येममष्ट ॥ ८ ॥ अग्निरेकाक्षरेणचतस्रः ॥ ४ ॥ षळनुवा
केषु त्रयश्चत्वारिꣳशत् ॥ ४३ ॥ देवसवितरिमꣳस्तनन्त्रयश्चत्वारिꣳशत् ॥हरिःॐ

श्रीगणेशायनमः ॥ श्रीगुरुभ्योनमः ॥ हरिःॐ ॥ एषते निर्ऋते भागस्त
ञ्जुषस्व स्वाहाग्निर्नेत्रेभ्यो देवेभ्यः पुरस्सद्भ्यस्स्वाहा यमनेत्रेभ्यो देवेभ्यो द
क्षिणसद्भ्यस्स्वाहा ॥ विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यस्स्वाहा मित्राव
रुणनेत्रेभ्योवा मरुन्नेत्रेभ्योवा देवेभ्य उत्तरसद्भ्यस्स्वाहा ॥ सोमनेत्रेभ्यो देवेभ्यउ
परिसद्भ्योदुवस्वद्भ्यस्स्वाहा ॥ १ ॥ येदेवा अग्निनेत्राः पुरस्सदस्तेभ्यस्स्वाहा येदे
वायमनेत्रादक्षिणसदस्तेभ्यस्स्वाहा ॥ येदेवा विश्वदेवनेत्राःपश्चात्सदस्तेभ्यस्स्वा
हा येदेवा मित्रावरुणनेत्रावा मरुन्नेत्रावोत्तरसदस्तेभ्यस्स्वाहा ॥ येदेवास्सोमने
त्रा उपरिसदो दुवस्वन्तस्तेभ्यस्स्वाहा ॥ २ ॥ अग्ने सहस्व पृतना अभिमातीर
पास्य ॥ दुष्टरस्तरन्नरातीर्वर्चोधा यज्ञवाहसि ॥ देवस्यत्वा सवितुः प्रसवेऽश्वि
नोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ ३ ॥ उपांशोर्वीर्येण जुहोमि हतꣳरक्षस्स्वाहा ॥

रक्षसान्त्वा वधायावधिष्म रक्षोऽमुष्यत्वा वधायामुमवधिष्म ॥ जुषाणोऽध्वाज्यस्य वेतुस्वाहा ॥ ४ ॥ १

अपोदेवा मधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्मित्रावरुणा अभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ १ ॥ वृष्णऊर्मिरसि राष्ट्रदा राष्ट्रम्मे देहिस्वाहा वृष्णऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मैदेहि ॥ वृषसेनोऽसिराष्ट्रदा राष्ट्रम्मे देहिस्वाहा वृषसेनोऽसिराष्ट्रदा राष्ट्रममुष्मैदेहि ॥ २ ॥ अर्थेतस्थराष्ट्रदा राष्ट्रम्मे दत्तस्वाहार्थेतस्थराष्ट्रदाराष्ट्रममुष्मैदत्त ॥ ओजस्वतीस्थ राष्ट्रदा राष्ट्रम्मेदत्त स्वाहौजस्वतीस्थ राष्ट्रदा राष्ट्रममुष्मैदत्त ॥ आपः परिवाहिणीस्थराष्ट्रदा राष्ट्रम्मेदत्तस्वाहापः परिवाहिणीस्थराष्ट्रदा राष्ट्रममुष्मैदत्त ॥ अपाम्पतिरसिराष्ट्रदा राष्ट्रम्मेदेहि स्वाहापाम्पतिरसि राष्ट्रदा राष्ट्रममुष्मैदेहि ॥ अपाङ्गर्भोऽसि राष्ट्र

दाराष्ट्रम्मेदेहि स्वाहापाङ्गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मैदेहि ॥ सूर्यवर्चसस्थराष्ट्र
दाराष्ट्रम्मे दत्तस्वाहा सूर्यवर्चसस्थराष्ट्रदा राष्ट्रममुष्मैदत्त ॥ सूर्यत्वचस्थराष्ट्र
दाराष्ट्रम्मेदत्तस्वाहा सूर्यत्वचस्थराष्ट्रदा राष्ट्रममुष्मैदत्त ॥ व्रजक्षितस्थराष्ट्रदा
राष्ट्रम्मेदत्तस्वाहा व्रजक्षितस्थराष्ट्रदा राष्ट्रममुष्मैदत्त ॥ वाशास्थराष्ट्रदा राष्ट्रम्मेद
त्तस्वाहा वाशास्थराष्ट्रदा राष्ट्रममुष्मैदत्त ॥ मान्दास्थराष्ट्रदा राष्ट्रम्मेदत्तस्वाहा
मान्दास्थराष्ट्रदा राष्ट्रममुष्मैदत्त ॥ शक्वरीस्थराष्ट्रदा राष्ट्रम्मेदत्तस्वाहा शक्वरीस्थ
राष्ट्रदा राष्ट्रममुष्मैदत्त ॥ जनभृतस्थराष्ट्रदा राष्ट्रम्मेदत्तस्वाहा जनभृतस्थरा
ष्ट्रदा राष्ट्रममुष्मैदत्त ॥ विश्वभृतस्थराष्ट्रदा राष्ट्रम्मेदत्तस्वाहा विश्वभृतस्थरा
ष्ट्रदा राष्ट्रममुष्मैदत्त ॥ शैष्ठास्थराष्ट्रदा राष्ट्रम्मेदत्तस्वाहा शैष्ठास्थराष्ट्रदा राष्ट्रम
मुष्मैदत्त ॥ आपस्वाराज्ञीस्थराष्ट्रदा राष्ट्रममुष्मैदत्त ॥ ३ ॥ सम्मधुमतीर्मधुम

तीभिः पृच्यन्ताम्महिक्षत्रङ्क्षत्रिया यवन्वानाः ॥ अनाधृष्टास्सीदत सहौजसा महि क्षत्रङ्क्षत्रिया यदधतीः ॥ ४ ॥  २

सविता त्वा प्रसवानाꣳसुवतामग्निर्गृहपतीनाꣳसोमो वनस्पतीनाम् ॥ बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशूनाम्मित्रस्सत्याय वरुणो धर्मपतीनाम् ॥ १ ॥ इमन्देवा असपत्नꣳसुवध्वम्महते क्षत्राय महते ज्यैष्ठ्याय ॥ इमममुममुष्यपुत्रममुष्याःपुत्रमस्यैविशे ॥ २ ॥ एषवः कुरवोराजैषवः पञ्चाला राजा ॥ सोमोऽस्माकम्ब्राह्मणानाꣳराजा ॥ ३ ॥  ३

सोमस्यत्विषिरस्यग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा ॥ पूष्णे स्वाहा बृहस्पतये स्वाहा ॥ १ ॥ इन्द्राय स्वाहाꣳशाय स्वाहाश्लोकायस्वाहा घोषाय स्वाहा भगाय स्वाहार्यम्णेस्वाहा ॥ सवितुर्वः प्रसवउत्पुनाम्याच्छिद्रेण

पवित्रेण सूर्यस्यरश्मिभिः ॥ अनिभृष्टमासि वाचोबन्धुस्तपोजास्सोमस्य दात्रमासि
स्वाहाराजस्वः ॥२॥ सधमादो द्युम्निनीराप एता अनाधृष्टा अपस्योवसानाः ॥ पस्त्यासु
चक्रे वरुणस्सधस्थमपाᳪशिशुर्मातृतमास्वन्तः ॥३॥ क्षत्रस्योल्बमासि क्षत्रस्य जरा
य्वसि क्षत्रस्यनाभिरासि क्षत्रस्ययोनिरसि ॥ इन्द्रस्यवार्त्रघ्नमासि त्वयायँ वृत्रँ वध्या
न्मित्रस्यासि वरुणस्यासि ॥ ४ ॥ रुजासि द्रुवासि क्षुपासि ॥ पातैनम्प्राञ्चम्पातैनं
म्प्रत्यञ्चम्पातैनंतिर्यञ्चंदिग्भ्यःपात ॥ ५ ॥ आविर्मर्या आवित्तो अग्निर्गृहपति
रावित्तइन्द्रोवृद्धश्रवा आवित्तः पूषा विश्ववेदा अवित्तौ मित्रावरुणौ धृतव्रतौ ॥
अवित्ते द्यावापृथिवी विश्वशम्भू आविरत्तादितिरुरुशर्मा ॥ ६ ॥ ४

अवेष्टा दन्दशूकाः प्राचीमारोह गायत्री त्वावतु ॥ रथन्तरᳪसाम त्रिवृत्स्तो
मोवसन्त ऋतुर्ब्रह्म द्रविणम् ॥ १ ॥ दक्षिणामारोह त्रिष्टुप्त्वावतु ॥ बृहत्सामप

श्वदशस्तोमो ग्रीष्मऋतुः क्षत्रन्द्रविणम् ॥ २ ॥ प्रतीचीमारोह जगतीत्वावतु ॥
वैरूपꣳसामसप्तदशस्तोमोवर्षाऋतुर्विड्द्रविणम् ॥ ३ ॥ उदीचीमारोहानुष्टुप्त्वा
वतु ॥ वैराजꣳसामैकविꣳशस्तोमश्शरद्दतुः फलन्द्रविणम् ॥ ४ ॥ ऊर्ध्वामा
रोह पङ्क्तिस्त्वावतु ॥ शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्त
शिशिरा ऋतूवर्चोद्रविणम् ॥ प्रत्यस्तन्नमुचेश्शिरः ॥५॥ सोमस्य त्विषिरसि त
वेवमे त्विषिर्भूयात् ॥ मृत्योः पाह्योजोऽसिसहोऽस्यमृतमसि ॥ ६ ॥ हिरण्य
रूपा उषसोविरोक उभा इन्द्रा उदितस्सूर्यश्च ॥ आरोहतँवरुण मित्र गर्त
न्ततश्चक्षाथामदितिन्दितिञ्च ॥ मित्रोऽसि वरुणोऽसि ॥ ७ ॥ ५

सोमस्यत्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसा ॥ इन्द्रस्येन्द्रियेण
मरुतामोजसा क्षत्राणाङ्क्षत्रपतिरेध्यतिदिद्यून्पाहि ॥ १ ॥ इमन्देवा असपत्नꣳ

सुवब्ध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्याय ॥ इममुममुष्य पु
त्रममुष्याः पुत्रमस्यैविशे ॥ २ ॥ एषवः कुरवो राजैषवः पञ्चालाराजा ॥ सो
मोऽस्माकम्ब्राह्मणानाᳬराजा ॥ ३ ॥ प्रपर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्व
सिचइयानाः ॥ ताआववृत्रन्नधरा गुदक्ता अहिम्बुध्न्यमनुरीयमाणाः ॥ विष्णो
र्विक्रमणमासि विष्णोर्विक्रान्तमसि विष्णोःक्रान्तमसि ॥ ४ ॥ प्रजापते नत्वदे
तान्यन्योविश्वारूपाणि परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नोअस्तुवयᳬस्याम
पतयोरयीणाम् ॥ ५ ॥ रुद्रयत्ते क्रिविपरन्नाम ॥ तस्मैहुतमस्यमेष्टमसिस्वाहा ॥ ६ ॥ ६
इन्द्रस्य वज्रोऽसि मित्रावरुणयोस्त्वा प्रशास्त्रोःप्रशिषा युनज्मि ॥ अव्यथा
यैत्वा स्वधायै त्वारिष्टःफल्गुनः ॥ मरुतांप्रसवेन जयापाममनसासमिन्द्रियेण ॥
॥१॥ मातइन्द्रते वयन्तुराषाळयुक्तासोअब्रह्मता विदसाम ॥ तिष्ठारथमाधि यद्व

ञ्रहस्ता रश्मीन्द्देवयुवसेस्वश्वान् ॥२॥ अग्नयेगृहपतये स्वाहा सोमाय वनस्पतये
स्वाहा ॥ इन्द्रस्येन्द्रियाय स्वाहा मरुतामोजसे स्वाहा ॥ पृथिवि मातर्मामाहिꣳसी
र्मोअहन्त्वाम् ॥३॥ हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ॥
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम्बृहत् ॥४॥ इयदस्यायुर
स्यायुर्मेदेहियुङ्ङसि वर्चोऽसि वर्चोमे देहि ॥ऊर्गस्यूर्ज्जम्मयि धेहीन्द्रस्यवाम्बाहू
वीर्यकृतो उपावहरामि ॥ ५ ॥　७

स्योनासि सुषदासि क्षत्रस्ययोनिरासि ॥ स्योनामासीद सुषदामासीद क्षत्र
स्ययोनिमासीद ॥ १ ॥ निषसाद धृतव्रतो वरुणः पस्त्यास्त्वा ॥ साम्राज्याय सु
क्रतुः ॥२॥ अभिभूरस्ययानामेतास्तेपञ्चादिशःकल्पन्ताम्॥ ब्रह्मꣳस्त्वम्ब्रह्मासि ॥३॥
सवितासि सत्यप्रसवो वरुणोऽसि सत्यौजाः ॥ इन्द्रोऽसि विशौजा रुद्रोऽसि सुशे

वः ॥४॥ प्रियङ्करश्रेयस्करभूयस्कर ॥ इन्द्रस्यवज्रोऽसितेनमेरध्य ॥ ५ ॥ अग्निः पृथुर्धर्मणस्पतिर्जुषाणोअग्निः पृथुर्धर्मणस्पतिः ॥ आज्यस्य हविषोवेतु स्वाहा ॥ स्वाहाकृतास्सूर्यस्य रश्मिभिर्यतध्वꣳसजातानाम्मध्यमे ष्ठ्याय ॥ ६ ॥ ८

सवित्राप्रसवित्रा सरस्वत्यावाचा ॥ त्वष्ट्रारूपैः पूष्णा पशुभिरिन्द्रेणास्मै ॥ १ ॥ बृहस्पतिना ब्रह्मणा वरुणेनौजसाग्निना तेजसासोमेन राज्ञा ॥ विष्णुना देवतया दशम्येमँय्यज्ञँविष्णुमाप्नवानि ॥ २ ॥ ९

अश्विभ्याम्पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥ वायोः पूतः पवित्रेणप्रत्यङ्क्सोमोअतिस्रुतः ॥ इन्द्रस्य युज्यस्सखा ॥ १ ॥ कुविदङ्गयवमन्तोय वाश्चिद्यथादान्त्यनु पूर्वँवियूय ॥ इहेहैषाङ्कृणुहिभोजनानि येबर्हिषोनम उक्तिन्न जग्मुः ॥ उपयामगृहीतोऽस्याश्विभ्यान्त्वा सरस्वत्यैत्वेन्द्राय त्वासुत्राम्णे ॥ २ ॥

युवꣳसुराममश्विना नमुचा आसुरे सचा ॥ विपिपानाश्शुभस्पती इन्द्रङ्कर्मस्वावतम् ॥ ३ ॥ पुत्रमिवपितरा अश्विनोभेन्द्रावधुःकाव्यैर्दꣳसनाभिः ॥ यत्सुरामँव्यपिबश्शचीभिस्सरस्वती त्वामघवन्नभिष्णक् ॥ ४ ॥ १० ॥ हरिःॐ

एषतेचतस्रः ॥ ४ ॥ अपोदेवाश्च ॥ ४ ॥ सवितारवातिस्रः ॥ ३ ॥ सोमस्यत्विषिषट् ॥ ६ ॥ अवेष्टासप्त ॥ ७ ॥ सोमस्यत्वाषट् ॥ ६ ॥ इन्द्रस्यवज्रः पञ्च ॥ ५ ॥ स्योनासिषट् ॥ ६ ॥ सवित्राद्वे ॥ २ ॥ अश्विभ्याञ्चतस्रः ॥ ४ ॥दशानुवाकेषु सप्तचत्वारिꣳशत् ॥ ४७ ॥ एषतेतेजोऽसिसप्तचत्वारिꣳशत् ॥ अर्थेतओजस्वतीरापोऽपाम्पतिरपाङ्गर्भस्सूर्यवर्चसस्सूर्यत्वचोव्रजाक्षितो वाशा मान्दाश्शाक्वरीर्जनभृतोविश्वभृतश्शैष्ठा आपः इतिशुक्लयजुर्वेदकाण्वसँहितापाठे एकादशोऽध्यायः हरिःॐ

श्रीगुरुभ्योनमः हरिःॐ ॥ युञ्जानः प्रथमम्मनस्तत्वाय सविता धियः ॥ अ
ग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥ युक्तेन मनसा वयन्देवस्य सवि
तुस्सवे ॥ स्वर्गेयाय शक्त्या ॥ २ ॥ युक्त्वाय सविता देवान्त्स्वर्यतोधियादि
वम् ॥ बृहज्ज्योतिःकरिष्यतस्सविता प्रसुवातितान् ॥ ३ ॥ युञ्जते मन उत
युञ्जते धियो विप्रा विप्रस्य बृहतोविपश्चितः ॥ विहोत्रादधे वयुना विदेकइन्म
ही देवस्य सवितुः परिष्टुतिः ॥ ४ ॥ युजेवाम्ब्रह्म पूर्व्यन्नमोभिर्विश्लोक एतुप
थ्येव सूरेः ॥ शृण्वन्तु विश्वे अमृतस्य पुत्रा आये धामानि दिव्यानि तस्थुः ॥
५ ॥ यस्य प्रयाणमन्वन्यइद्ययुर्देवादेवस्य महिमानमोजसा ॥ यःपार्थिवानि
विममे सएतशोरजांꣳसि देवस्सविता महित्वना ॥ ६ ॥ देव सवितः प्रसुवय
ज्ञम्प्रसुव यज्ञपतिम्भगाय ॥ दिव्योगन्धर्वः कैतपूः केतन्नःपुनातु वाचस्पति

वाचन्नस्स्वदतु ॥ ७ ॥ इमन्नोदेव सवितर्यज्ञम्प्रणय देवाव्यꣳसखिविदꣳसत्रा
जितन्धनाजितꣳस्वर्जितम् ॥ ऋचास्तोमꣳसमर्धय गायत्रेण रथन्तरम्बृहद्गायत्र
वर्तनि स्वाहा ॥ ८ ॥ देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्या
म् ॥ आददेगायत्रेण च्छन्दसाङ्गिरस्वत्पृथिव्यास्सधस्थादग्निम्पुरीष्यमङ्गिरस्व
दाभर ॥ त्रैष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ९ ॥ अभ्रिरसि नार्यसि त्वया वयम
ग्निꣳशकेम खनितुम् ॥ सधस्थ आजागतेनच्छन्दसाङ्गिरस्वत् ॥ १० ॥ हस्त
आधाय सविता बिभ्रदभ्रिꣳहिरण्ययीम् ॥ अग्नेर्ज्योतिर्निचाय्य पृथिव्या अ
ध्याभरदानुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥ ११ ॥ ॥ १

प्रतूर्त्तँव्वाजिन्नाद्रववरिष्ठामनुसँव्वतम् ॥ दिवितेजन्म परममन्तरिक्षे तव
नाभिःपृथिव्यामधियो निरित् ॥ १ ॥ युञ्जाथाꣳरासभँय्युवमस्मिन्यामे वृषण्व

सू ॥ अग्निम्भरन्तमस्मयुम् ॥ २ ॥ योगेयोगे तवस्तरँ्वाजेवाजे हवामहे ॥
सखाय इन्द्र मूतये ॥ ३ ॥ प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यम्मयोभू
रेहि ॥ उर्वन्तरिक्षँ्वीहि स्वस्ति गव्यूतिरभयानि कृण्वन्पूष्णा सयुजा सह ॥
४ ॥ पृथिव्यास्सधस्थादग्निम्पुरीष्यमङ्गिरस्वदा भर ॥ अग्निम्पुरीष्यमङ्गिरस्व
दच्छेमोऽग्निम्पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ ५ ॥ अन्वग्निरुषसामग्रमख्यदन्वहा
निप्रथमो जातवेदाः ॥ अनुसूर्यस्य पुरुत्रा च रश्मीननुद्यावापृथिवी आ तत
न्थ ॥ ६ ॥ आगत्य वाज्यध्वानꣳसर्वा मृधो विधूनुते ॥ अग्निꣳसधस्थे महति
चक्षुषा निचिकीषते ॥ ७ ॥ आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचात्वम् ॥ भू
मेर्वृत्वाय नो ब्रूहि यतःखनेम तँ्वयम् ॥ ८ ॥ द्यौस्ते पृष्ठम्पृथिवी सधस्थमा
त्मान्तरिक्षꣳसमुद्रो योनिः ॥ विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः ॥ ९ ॥

उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा वाजिन् ॥ वयꣳस्याम सु
मतौ पृथिव्या अग्निङ्खनन्त उपस्थे अस्याः ॥ १० ॥ उदक्रमीद्द्रविणोदावा
ज्यर्वाकस्सुलोकꣳसुकृतम्पृथिव्याम् ॥ ततः खनेम सुप्रतीकमग्निꣳस्वोरुहाणा
अधिनाकमुत्तमम् ॥ ११ ॥ आत्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तम्भुवना
नि विश्वा ॥ पृथुन्तिरश्चावयसा बृहन्तँव्यचिष्ठमन्नैरभसन्दृशानम् ॥ १२ ॥
आविश्वतः प्रत्यञ्चञ्जिघर्म्यरक्षसा मनसा तज्जुषेत ॥ मर्यश्रीस्स्पृहयद्वर्णो अ
ग्निर्नाभिमृशे तन्वा जर्भुराणः ॥ १३ ॥ परि वाजपतिः कविरग्निर्हव्यान्यक्रमी
त् ॥ दधद्रत्नानि दाशुषे ॥ १४ ॥ परित्वाग्ने पुरँवयँविप्रꣳसहस्य धीमहि ॥
धृषद्वर्णन्दिवेदिवे भेत्तारम्भङ्गुरावताम् ॥ १५ ॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणि
स्त्वमद्भ्यस्त्वमश्मनस्परि ॥ त्वँवनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणान्नृपते जायसे

शुचिः ॥ १६ ॥ २

देवस्य त्वा सवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ पृथिव्यास्सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामि ॥ ज्योतिष्मन्तन्त्वाग्नेसुप्रतीकमजस्रेण भानुनादीद्यतम् ॥ शिवम्प्रजाभ्योऽहिंꣳसन्तम्पृथिव्यास्सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामः ॥ १ ॥ अपाम्पृष्ठमसियोनिरग्नेस्समुद्रमभितः पिन्वमानम् ॥ वर्धमानोमहाँ२आच पुष्करे दिवोमात्रयावरिम्णा प्रथस्व ॥ २ ॥ शर्मचस्थो वर्मचस्थोऽच्छिद्रे बहुले उभे ॥ व्यचस्वती सꣳवसाथाम्भृतमग्निम्पुरीष्यम् ॥ ३ ॥ सꣳवसाथाꣳस्वर्विदा समीची उरसात्मना ॥ अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ॥ पुरीष्योऽसि विश्वभरा अथर्वात्वा प्रथमोनिरमन्थदग्ने ॥ ४ ॥ त्वामग्ने पुष्करा दध्यथर्वा निरमन्थत ॥ मूर्ध्नोविश्वस्य वाघतः ॥ ५ ॥ तमुत्वा द

ध्यङ् ऋषिः पुत्र ईधे अथर्वणः ॥ वृत्रहणम्पुरन्दरम् ॥ ६ ॥ तमुत्वा पाथ्यो वृषा
समीधेदस्युहन्तमम् ॥ धनञ्जयᳬरणेरणे ॥ ७ ॥ सीदहोतस्स्वउलोके चिकित्वा
न्त्सादया यज्ञᳬसुकृतस्ययोनौ ॥ देवावीर्देवान्हाविषा यजास्यग्ने बृहद्यजमाने वयो
धाः ॥ ८ ॥ निहोता होतृषदने विदानस्त्वेषो दीदिवाँ२असदत्सुदक्षः ॥ अद
ब्धवृतप्रमतिर्वसिष्ठस्सहस्रम्भरश्शुचिजिह्वोअग्निः ॥ ९ ॥ सᳬसीदस्व महाँ२अ
सिशोचस्व देववीतमः ॥ विधूममग्ने अरुषम्मियेध्य सृजप्रशस्त दर्शतम् ॥१०॥ ३
अपोदेवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः ॥ तासान्नास्थानादुज्जिहतामोष
धयस्सुपिप्पलाः ॥ १ ॥ सन्ते वायुर्मातरिश्वा दधातूत्तानाया हृदयँय्यद्विकस्तम्॥
योदेवानाञ्चरासि प्राणथेन कस्मै देववषळस्तु तुभ्यम् ॥ २॥ सुजातो ज्योतिषा
सहशर्मवरूथमा सदत्स्वः ॥ वासोअग्ने विश्वरूपᳬसँव्ययस्व विभावसो ॥ ३ ॥

उदुतिष्ठस्वध्वरावानो देव्या धिया ॥ दृशेचभासा बृहता सुशुक्वनिराग्ने याहिसु
शस्तिभिः ॥ ४ ॥ ऊर्ध्व ऊषुणं ऊतयेतिष्ठा देवोन सविता ॥ ऊर्ध्वोवाजस्य स
निता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ५ ॥ सजातो गर्भो असिरोदस्योरग्ने
चारुर्विभृतओषधीषु ॥ चित्रश्शिशुः परितमाꣳस्यक्तून्प्रमातृभ्यो अधि कनिक्रद
द्गाः ॥ ६ ॥ स्थिरोभव वीड्वङ्ग आशुर्भव वाज्यर्वन् ॥ पृथुर्भव सुषदस्त्वमग्नेः
पुरीषवाहणः ॥ ७ ॥ शिवोभवप्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ॥ माद्यावा पृथि
वी अभि शोचीर्मान्तरिक्षम्मावनस्पतीन् ॥ ८ ॥ प्रैतुवाजी कनिक्रदन्नानदद्रास
भस्पत्वा ॥ भरन्नग्निम्पुरीष्यम्मापाद्यायुषः पुरा ॥ ९ ॥ वृषाग्निंवृषणम्भरन्न
पाङ्गर्भꣳसमुद्रियम् ॥ अग्न आयाहि वीतये ॥ ऋतꣳसत्यमृतꣳसत्यमग्निम्पुरी
ष्यमङ्गिरस्वद्भरामः ॥ १० ॥ ओषधयः प्रतिमोदध्वमग्निमेतꣳशिवमायन्तमभ्यत्र

युष्माः ॥ व्यस्यन्विश्वाअनिराअमीवा निषीदन्नो अपदुर्मतिञ्जहि ॥ ११ ॥ ओषधयः प्रतिगृभ्णीत पुष्पवतीस्सुपिप्पलाः ॥ अयँव्वो गर्भ ऋत्वियः प्रत्नꣳसधस्थमासदत् ॥ १२ ॥ विपाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ॥ सुशर्मणो बृहतश्शर्मणिस्यामग्नेरहꣳसुहवस्यप्रणीतौ ॥ १३ ॥ ४

आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन ॥ महेरणाय चक्षसे ॥ १ ॥ योवःशिवतमोरसस्तस्य भाजय तेहनः ॥ उशतीरिव मातरः ॥ २ ॥ तस्माअरङ्ग मामवो यस्यक्षयाय जिन्वथ ॥ आपोजनयथाचनः ॥ ३ ॥ मित्रस्सꣳसृज्य पृथिवीम्भूमिञ्च ज्योतिषा सह ॥ सुजातञ्जातवेदसमयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः ॥४॥ रुद्रास्सꣳसृज्य पृथिवीम्बृहज्ज्योतिस्समीधिरे ॥ तेषाम्भानुरजस्र इच्छुक्रो देवेषु रोचते ॥ ५ ॥ सꣳसृष्टाँव्वसुभो रुद्रैर्धीरैः कर्मण्याम्मृदम् ॥ हस्ताभ्या

म्मृद्धीङ्कृत्वा सिनीवाली कृणोतु ताम् ॥ ६ ॥ सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा ॥ सा तुभ्यमदिते मह्योखान्दधातु हस्तयोः ॥ ७ ॥ उखाङ्कृणोतु शक्त्या बाहुभ्यामदितिर्धिया ॥ माता पुत्रँय्यथोपस्थेसाग्निम्बिभर्तु गर्भ आ ॥८॥ मखस्य शिरोऽसि वसवस्त्वा कृण्वन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्ध्रुवासि पृथिव्यसि ॥ धारया मयि प्रजाँ रायस्पोषङ्गौपत्यँ सुवीर्यँ सजातान्यजमानाय ॥ रुद्रास्त्वाकृण्वन्तु त्रैष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसि ॥ धारया मयि प्रजाँ रायस्पोषङ्गौपत्यँ सुवीर्यँ सजातान्यजमानाय ॥ आदित्यास्त्वा कृण्वन्तु जागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासि द्यौरसि ॥ धारया मयि प्रजाँ रायस्पोषङ्गौपत्यँ सुवीर्यँ सजातान्यजमानाय ॥ विश्वेत्वा देवा वैश्वानराःकृण्वन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वद्ध्रुवासिदिशोऽसि ॥ धारया मयि प्रजाँरायस्पोषङ्गौपत्यँ

सुवीर्यं सजातान्यजमानाय ॥ अदित्यै रास्नास्यदितिष्टे बिलङ्गृभ्णातु ॥ ९ ॥
कृत्वाय सा महीमुखाम्मृन्मयींयोनिमग्नये ॥ पुत्रेभ्यः प्रायच्छददितिः श्रपया
निति ॥ १० ॥ वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु
त्रैष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ आदित्यास्त्वा धूपयन्तु जागतेनच्छन्दसाङ्गिरस्व
द्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ इन्द्रस्त्वा धूप
यतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ ११ ॥ ५
अदितिष्ट्वा देवी विश्वदेव्यावती ॥ पृथिव्यास्सधस्थे अङ्गिरस्वत्खनत्वव
ट ॥ १ ॥ देवानान्त्वा पत्नीर्देवीर्विश्वदेव्यावतीः ॥ पृथिव्यास्सधस्थे अङ्गि
रस्वद्दधतूखे ॥ धिषणास्त्वा देवीर्विश्वदेव्यावतीः ॥ पृथिव्यास्सधस्थे अङ्गि
रस्वदभीन्धतामुखे ॥ वरूत्रीष्ट्वा देवीर्विश्वदेव्यावतीः ॥ पृथिव्यास्सधस्थे

अङ्गिरस्वच्छ्रपयन्तूखे ॥ ग्नास्त्वादेवीर्विश्वदेव्यावतीः ॥ पृथिव्यास्सधस्थे अङ्गिरस्व
त्पचन्तूखे ॥ जनयस्त्वाच्छिन्नपत्रादेवीर्विश्वदेव्यावतीः ॥ पृथिव्यास्सधस्थे अङ्गिर
स्वत्पचन्तूखे ॥२॥ मित्रस्यचर्षणीधृतोऽवो देवस्यसानसि ॥ द्युम्नाश्चित्रश्रवस्तम
म् ॥३॥ देवस्त्वासवितोद्वपतुसुपाणिस्स्वङ्गुरिस्सुबाहुरुतशक्त्या ॥ अव्यथमानापृ
थिव्यामाशादिशआपृण ॥४॥ उत्थायबृहतीभवोदुतिष्ठध्रुवात्वम् ॥ मित्रैतान्तउखा
म्परिददाम्यभित्याएषामाभेदि॥वसवस्त्वाच्छृन्दन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रा
स्त्वाच्छृन्दन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ आदित्यास्त्वाच्छृन्दन्तुजागतेनच्छन्द
साङ्गिरस्वद्विश्वेत्वादेवावैश्वानराआच्छृन्दन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वत् ॥५॥ ६
आकूतिमग्निम्प्रयुजꣳस्वाहा मनो मेधामग्निम्प्रयुजꣳस्वाहा ॥ चित्तंविज्ञातम
ग्निम्प्रयुजꣳस्वाहा वाचो विधृतिमग्निम्प्रयुजꣳस्वाहा ॥ प्रजापतये मनवेस्वाहाग्न

ये वैश्वानराय स्वाहा ॥ १ ॥ विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ॥ विश्वो
राय इषुध्यति द्युम्नँवृणीत पुष्यसे स्वाहा ॥ २ ॥ मा सु भित्था मा सु रिषोऽ
ब धृष्णु वीरयस्वसु ॥ अग्निश्चेदङ्करिष्यथः ॥ ३ ॥ दृँहस्व देवि पृथिवि स्वस्त
ये आ सुरी माया स्वधया कृतासि ॥ जुष्टन्देवेभ्य इदमस्तु हव्यमरिष्टा त्वमु
दिहि यज्ञे अस्मिन् ॥ ४ ॥ द्र्वन्नस्सर्पिरासुतिः प्रत्नो होता वरेण्यः ॥ सहसस्पु
त्रो अद्भुतः ॥ ५ ॥ परस्या अधि सँव्वतोऽवराँ२अभ्यातर ॥ यत्राहमस्मिताँऽअ
व ॥ ६ ॥ परमस्याः परावतो रोहिदश्व इहा गहि ॥ पुरीष्यः पुरुप्रियोऽग्नेत्वन्त
रामृधः ॥ ७ ॥ यदग्ने कानिकानि चिदाते दारूणि दध्मसि ॥ सर्वन्तदस्तु
ते घृतन्तज्जुषस्वयविष्ठ्य ॥ ८ ॥ यदत्त्युपजिह्विकायद्वम्रो अतिसर्पति ॥ सर्वन्त
दस्तुते घृतन्तज्जुषस्वयविष्ठ्य ॥९॥ अहरहरप्रयावम्भरन्तोऽश्वायेवातिष्ठतेघासम

स्मै ॥ रायस्पोषेण समिषा मदन्तोऽग्ने माते प्रतिवेशा रिषाम ॥ १० ॥ नाभा पृथिव्यास्समिधाने अग्नौ रायस्पोषाय बृहते हवामहे ॥ इरम्मदम्बृहदुक्थँय्यजत्रञ्जेतारमग्निम्पृतना सुसासहिम् ॥ ११ ॥ यास्सेना अभीत्वरीराव्याधिनीरुगणा उत ॥ ये स्तेना ये चतस्करास्ताꣳस्ते अग्नेऽपिदधाम्यास्ये ॥ १२ ॥ दꣳष्ट्राभ्याम्मलिम्लूञ्जम्भ्यैस्तस्कराँ२उत ॥ हनुभ्याꣳस्तेनान्भगवस्ताꣳस्त्वङ्खाद सुखादितान् ॥ १३ ॥ ये जनेषुमलिम्लव स्तेनासस्तस्करा वने ॥ येकक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः ॥ १४ ॥ यो अस्मभ्यमरातीयाद्यश्चनो द्वेषतेजनः ॥ निन्दाद्यो अस्मान्धिप्साच्चसर्वन्तम्मस्मसा कुरु ॥ १५ ॥ सꣳशितम्मे ब्रह्मसꣳशितँव्वीर्यम्बलम् ॥ सꣳशितङ्क्षत्रञ्जिष्णु यस्याहमस्मि पुरोहितः ॥ १६ ॥ उदेषाम्बाहू अतिरमुद्वर्चो अथोबलम् ॥ क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ२ अहम् ॥१७॥

अन्नपतेऽन्नस्य नोदेह्यनमीवस्य शुष्मिणः ॥ प्रप्र दातारन्तारिष ऊर्जन्नो धेहि द्विपदे चतुष्पदे ॥ विश्वकर्मणे स्वाहा ॥ १८ ॥ पुनस्त्वादित्या रुद्रा वसवस्समिन्धताम्पुनर्ब्रह्माणो वसुनीथ यज्ञैः ॥ घृतेन त्वन्तन्वँ वर्धयस्व सत्यास्सन्तु यजमानस्य कामास्स्वाहा ॥ १९ ॥ ७ ॥ हरिःॐ

युञ्जान एकादश ॥ ११ ॥ प्रतूर्तँ वाजिन्षोळश ॥ १६ ॥ देवस्यत्वादश ॥१० ॥ अपोदेवीस्त्रयोदश ॥ १३ ॥ आपोह्येकादश ॥ ११ ॥ अदितिष्ट्वापञ्च ॥ ५ ॥ आकूतिमेकोनविंशतिः ॥ १९ ॥ सप्तानुवाकेषु पञ्चाशीतिः ॥ ८५ ॥ युञ्जानोऽग्नेजातान्पञ्चाशीतिः ॥ शुक्लयजुर्वेद काण्वसँहितापाठे द्वादशोऽध्यायः ॥ हरिःॐ

हरिःॐ ॥ दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुःश्रिये रुचानः ॥ अग्निरमृतो अभवद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः ॥ १ ॥ नक्तोषासा समनसाविरूपे

धापयेते शिशुमेकँ समीची ॥ द्यावाक्षामारुक्मो अन्तर्विभाति देवा अग्नि
न्धारयन्द्रविणोदाः ॥ २ ॥ विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रन्द्विप
दे चतुष्पदे ॥ विनाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो विराजति ॥ ३ ॥
सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरः ॥ गायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ ॥ ४ ॥ स्तो
मआत्माच्छन्दाँस्यङ्गानि यजूँषि नाम ॥ सामते तनूर्वामदेव्यँय्यज्ञायज्ञि
यम्पुच्छन्धिष्ण्याश्शफाः ॥ ५ ॥ सुपर्णोऽसि गरुत्मान्दिवङ्गच्छस्वः पत ॥ वि
ष्णोःक्रमोऽसि सपत्नहा गायत्रञ्छन्द आरोह ॥ पृथिवीमनु विक्रमस्व ॥ विष्णोः
क्रमोऽस्यभिमातिहा त्रैष्टुभञ्छन्द आरोह ॥ अन्तरिक्षमनु विक्रमस्व ॥ वि
ष्णोःक्रमोऽस्यरातीयतो हन्ता जागतञ्छन्द आरोह ॥ दिवमनुविक्रमस्व ॥
विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभञ्छन्द आरोह ॥ दिशोनुविक्रमस्व ॥

६ ॥ अक्रन्ददग्निस्स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् ॥ सद्यो जज्ञानो
विहीमिद्धो अख्यदारोदसी भानुना भात्यन्तः ॥ ७ ॥ अग्नेभ्यावर्तिन्नभिमा
निवर्तस्वायुषा वर्चसा प्रजया धनेन ॥ सन्यामेधया रय्या पोषेण ॥ ८ ॥ अ
ग्ने अङ्गिरश्शतन्ते सन्त्वा वृतस्सहस्रन्त उपावृतः ॥ अधापोषस्य पोषेण पुनर्नो
नष्टमाकृधि पुनर्नो रयिमाकृधि ॥ ९ ॥ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा ॥
पुनर्नः पाह्यꣳहसः ॥ १० ॥ सहरय्या निवर्तस्वाग्ने पिन्वस्व धारय ॥ विश्व
प्स्न्या विश्वतस्परि ॥ ११ ॥ आत्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठा विचाचलिः ॥ वि
शस्त्वा सर्वा वाञ्छन्तु मात्वद्राष्ट्रमधिभ्रशत् ॥ १२ ॥ उदुत्तमँ वरुणपाशमस्मद
वाधमँ विमध्यमꣳ श्रथाय ॥ अथावयमादित्य व्रते तवानागसो अदितये स्या
म ॥ १३ ॥ अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्योतिषागात् ॥

अग्निर्भानुना रुशता स्वङ्ग आजातो विश्वासद्मान्यप्राः ॥ १४ ॥ हꣳसश्शुचिष
द्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतम्बृहत् ॥ १५ ॥ सीदत्वम्मातुरस्या उपस्थे विश्वा
न्यग्नेवयुनानि विद्वान् ॥ मैनान्तपसामार्चिषाभिशोचीरन्तरस्याꣳशुक्रज्योतिर्वि
भाहि ॥ १६ ॥ अन्तरग्ने रुचा त्वमुखायास्सदनेस्वे ॥ तस्यास्त्वꣳहरसा तप
ञ्जातवेदःशिवोभव ॥ १७ ॥ शिवोभूत्वा मह्यमग्ने अथो सीदशिवस्त्वम् ॥
शिवाः कृत्वा दिशस्सर्वास्स्वँय्योनिमिहासदः ॥ १८ ॥ १

दिवस्परि प्रथमञ्जज्ञे अग्निरस्मद्द्वितीयम्परि जातवेदाः ॥ तृतीयमप्सु नृम
णा अजस्रमिन्धान एनञ्जरते स्वाधीः ॥ १ ॥ विद्मातेअग्ने त्रेधा त्रयाणिं विद्माते
धाम विभृता पुरुत्रा ॥ विद्माते नाम परमङ्गुहायाद्विद्मा तमुत्सँय्यतं आजग

समुद्रेत्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवोअग्न ऊधन् ॥ तृतीयेत्वा
न्थ ॥ २ ॥ समुद्रेत्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवोअग्न ऊधन् ॥ तृतीयेत्वा
रजसि तस्थिवांसमपामुपस्थे महिषा अवर्धन् ॥ ३ ॥ अक्रन्ददग्निस्स्तनयन्निव
द्यौः क्षामारेरिहद्वीरुधस्समञ्जन् ॥ सद्योजज्ञानो विहीमिद्धोअख्यदारोदसी भानुना
भात्यन्तः ॥ ४ ॥ श्रीणामुदारो धरुणो रयीणाम्मनीषाणाम्प्रार्पणस्सोमगोपाः ॥
वसुस्सूनुस्सहसो अप्सुराजा विभात्यग्र उषसामिधानः ॥ ५ ॥ विश्वस्य केतुर्भुव
नस्य गर्भआरोदसी अपृणाज्जायमानः ॥ वीळुश्चिदद्रिमभिनत्परायञ्जनायदग्निम
यजन्त पञ्च ॥ ६ ॥ उशिक्पावको अरतिस्सुमेधा मर्त्तेष्वग्निरमृतो निधायि ॥
इयर्ति धूममरुषम्भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥ ७ ॥ दृशानो रुक्म
उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ॥ अग्निरमृतो अभवद्वयोभिर्यदेनन्द्यौरजन
यत्सुरेताः ॥ ८ ॥ यस्ते अद्य कृणवद्भद्रशोचेऽपूपन्देव घृतवन्तमग्ने ॥ प्रतन्नय

प्रतरँव्वस्योअच्छाभिसुम्नन्देवभक्तँय्यविष्ठ ॥ ९ ॥ आतम्भजसौ श्रवसेष्वग्न उक्थउक्थ आभंजशस्यमाने ॥ प्रियस्सूर्येप्रियो अग्ना भवात्युज्जातेन भिनदद्दुज्जनित्वैः ॥ १० ॥ त्वामग्ने यजमाना अनुद्यून्विश्वा वसुदधिरे वार्याणि ॥ त्वया सह द्रविणमिच्छमाना व्रजङ्गोमन्तमुशिजो विवव्रुः ॥ ११ ॥ अस्ताव्यग्निर्नराँ्सुशेवो वैश्वानरऋषिभिस्सोमगोपाः ॥ अद्वेषेद्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥ १२ ॥ २

समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्या जुहोतन ॥ १ ॥ उदुत्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः ॥ सनो भव शिवस्त्वँ सुप्रतीको विभावसुः ॥ २ ॥ प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिष्ट्वम् ॥ बृहद्भिर्भानुभिर्भासन्माहिँसीस्तन्वा प्रजाः ॥ ३ ॥ अक्रन्ददग्निस्स्तनयन्निवद्यौः क्षा

मारेरिहद्वीरुधंस्समञ्जन् ॥ सद्योजज्ञानो विहीमिद्धो अख्यदारोदसी भानुना भात्यन्तः ॥ ४ ॥ प्रप्रायमग्निर्भरतस्य शृण्वे वियत्सूर्यो नरोचते बृहद्भाः ॥ अभियः पूरुम्पृतना सुतस्थौ दीदाय दैव्योअतिथिःशिवोनः ॥ ५ ॥ आपोदेवीः प्रतिगृभ्णीत भस्मैतत्स्योनेकृणुध्वꣳसुरभा उलोके ॥ तस्मै नमन्ताञ्जनयस्सुपत्नीर्मातेवपुत्रम्बिभृताप्स्वेनत् ॥ ६ ॥ अप्स्वग्ने सधिष्ट वसौषधीरनु रुध्यसे ॥ गर्भे सञ्जायसे पुनः ॥ ७ ॥ गर्भो अस्यौषधीनाङ्गर्भो वनस्पतीनाम् ॥ गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥ ८ ॥ प्रसद्यभस्मना योनिमपश्च पृथिवीमग्ने ॥ सꣳसृज्य मातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ॥ ९ ॥ पुनरासद्यसदनमपश्च पृथिवीमग्ने ॥ शेषे मातुर्यथोपस्थेन्तरस्याꣳशिवतमः ॥ १० ॥ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा ॥ पुनर्नः पाह्यꣳहसः ॥ ११ ॥ सहरय्या

निवर्तस्वाग्ने पिन्वस्वधारय ॥ विश्वप्स्न्या विश्वतस्परि ॥ १२ ॥ बोधामे अ
स्यवचसो यविष्ठमँ्हिष्ठस्य प्रभृतस्य स्वधावः ॥ पीयतित्वो अनुत्वो गृणाति
वन्दारुष्टे तन्वँ्वन्दे अग्ने ॥ १३ ॥ सबोधि सूरिर्मघवा वसुपतेवसुदावन् ॥
युयोध्यस्मद्द्वेषाँ्सिविश्वकर्मणे स्वाहा ॥ १४ ॥ पुनस्त्वादित्या रुद्रा वसवस्स
मिन्धताम्पुनर्ब्रह्माणो वसुनीथ यज्ञैः ॥ घृतेन त्वन्तन्वँ्वर्धयस्व सत्यास्सन्तु
यजमानस्य कामास्स्वाहा ॥ १५ ॥ ३

अपेतवीतविचसर्पतातोयेऽत्रस्थ पुराणा येचनूतनाः ॥ अदाद्यमोऽवसानम्पृ
थिव्या अक्रन्निमम्पितरो लोकमस्मै ॥ १ ॥ संज्ञानमसि कामधरणम्मयिते का
मधरणम्भूयात् ॥ अग्नेर्भस्मास्यग्नेः पुरीषमसि ॥ चितस्थ परिचित ऊर्ध्वचि
तःश्रयध्वम् ॥ २ ॥ अयँ्सो अग्निर्यस्मिन्त्सोममिन्द्रस्सुतन्दधेजठरे वावशानः ॥

सहस्त्रियँ᳒वाजमत्यन्नसातिँ᳖ ससवान्त्सन्त्स्तूयसे जातवेदः ॥ ३ ॥ अग्नेयत्तेदि
विवर्चः पृथिव्याँय्यदोषधीष्वप्स्वायजत्र ॥ येनान्तरिक्षमुर्वाततन्थ त्वेषस्सभा
नुरर्णवो नृचक्षाः ॥ ४ ॥ अग्ने दिवो अर्णमच्छाजिगास्यच्छा देवाँ२ऊचिषेधि
ष्ण्याये ॥ यारोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः ॥ ५ ॥ पु
रीष्यासो अग्नयःप्रावणेभिस्सजोषसः ॥ जुषन्ताँय्यज्ञमद्रुहोऽनमीवा इषो महीः ॥६॥
इळामग्नेपुरुदꣳसꣳसनिङ्गोश्शश्वत्तमꣳ हवमानाय साध ॥ स्यान्नस्सूनुस्तनयो
विजावाग्ने साते सुमतिर्भूत्वस्मे ॥ ७ ॥ अयन्ते योनिर्ऋत्वियो यतोजातो अरोच
थाः ॥ तञ्जानन्नग्न आरोहाथानो वर्धयारायिम् ॥ ८ ॥ चिदसि तया देव
तयाङ्गिरस्वद्ध्रुवासीद ॥ परिचिदसि तयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ ९ ॥ लो
कम्पृणच्छिद्रम्पृणाथो सीदध्रुवात्वम् ॥ इन्द्राग्नीत्वा बृहस्पतिरस्मिन्योनाअसी

षदन् ॥ १० ॥ ताअस्य सूदर्दोहसस्सोमं श्रीणान्ति प्रश्नयः ॥ जन्मन्देवानाँव्वि शस्त्रिष्वारोचने दिवः ॥ ११ ॥ इन्द्रँव्विश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः ॥ रथी तम रथीनाँव्वाजानां सत्पतिम्पतिम् ॥ १२ ॥ समित सङ्कल्पेथा सम्प्रियौ रोचिष्णू सुमनस्यमानौ ॥ इषमूर्जमभि सँव्वसानौ ॥ १३ ॥ ॥ सँव्वाम्मनां सि सँव्वृता समुचित्तान्याकरम् ॥ अग्ने पुरीष्याधिपा भव त्वन्न इषमूर्जँय्यजमानाय धेहि ॥ १४ ॥ अग्ने त्वम्पुरीष्यो रयिमान्पुष्टिमाँ२ असि ॥ शिवाः कृत्वा दिशस्सर्वा स्स्वँय्योनिमिहासदः ॥ १५ ॥ भवतन्नस्समनसौ सचेतसा अरेपसौ ॥ मायज्ञ हिं सिष्टम्मा यज्ञपतिञ्जातवेदसौ शिवौभवतमद्यनः ॥ १६ ॥ मातेव पुत्रम्पृथिवी पुरीष्यमग्नि स्वेयोनावभारुखा ॥ ताँव्विश्वैर्देवैर्ऋतुभिस्सँव्विदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु ॥ १७ ॥ ४

असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मादि
च्छसातइत्यानमो देवि निर्ऋते तुभ्यमस्तु ॥ १ ॥ नमस्सुते निर्ऋते तिग्मते
जो यस्मयँव्विचृता बन्धमेतम् ॥ यमेनत्वँय्यम्या सँव्विदानोत्तमेनाके अधि
रोहयैनम् ॥ २ ॥ यस्यास्ते घोर आसञ्जुहोम्येषाम्बन्धानामवसर्जनाय ॥ या
न्त्वाजनो भूमिरिति प्रमन्दते निर्ऋतिन्त्वाहम्परि वेदविश्वतः ॥ ३ ॥ यन्ते दे
वी निर्ऋतिराबबन्ध पाशङ्ग्रीवास्वविचृत्यम् ॥ तन्ते विष्याम्यायुषो न मध्या
दथैतम्पितुमद्धि प्रसूतः ॥ नमो भूत्यै येदञ्चकार ॥ ४ ॥ निवेशनस्सङ्गम
नो वसूनाँव्विश्वा रूपाभिचष्टे शचीभिः ॥ देव इव सविता सत्य धर्मेन्द्रो न
तस्थौ समरे पथीनाम् ॥ ५ ॥ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ॥
धीरा देवेषु सुम्नया ॥ ६ ॥ युनक्त सीरा वियुगा तनुध्वङ्कृते योनौ वपतेहबी

जेम् ॥ गिरा चश्रुष्टिस्सभरा असन्नो नेदीय इत्सृण्यः पक्कमेयात् ॥ ७ ॥ शु
नꣳसुफाला विकृषन्तु भूमिꣳशुनङ्कीनाशा अभियन्तु वाहैः ॥ शुना सीरा ह
विषा तोशमाना सुपिप्पला ओषधीः कर्तमस्मे ॥ ८ ॥ घृतेन सीता मधुनास
मंज्यताँव्विश्वैर्देवैरनुमता मरुद्भिः ॥ ऊर्जस्वती पयसा पिन्वमानास्मान्त्सीते
पयसाभ्याववृत्स्व ॥ ९ ॥ लाङ्गलम्पवीरवत्सुशेवꣳसोमपित्सरु ॥ तदुद्वपति
गामविम्प्रफर्व्यंश्चपीवरीम्प्रस्थावद्रथवाहणम् ॥ १० ॥ कामङ्कामदुघे धुक्ष्व मि
त्राय वरुणायच ॥ इन्द्रायाश्विभ्याम्पूष्णे प्रजाभ्य ओषधीभ्यः ॥ ११ ॥ वि
मुच्यध्वमघ्न्यादेवयाना अगन्मतमसस्पारमस्य ॥ ज्योतिरापाम ॥ १२ ॥ स
जूरब्दो अयवोभिस्सजूरुषा अरुणीभिः ॥ सजोषसा अश्विनादꣳसोभिस्सजूस्सू
रएतशेन सजूर्वैश्वानर इळया घृतेन स्वाहा ॥ १३ ॥ ५

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामह ँ शतन्धामा
नि सप्तच ॥ १ ॥ शतँव्वो अम्बधामानि सहस्रमुतवो रुहः ॥ अधा शतक्रत्वो
यूयमिमम्मे अगदङ्कृत ॥ २ ॥ ओषधीः प्रति गृभ्णीत पुष्पवतीः प्रसूवरीः ॥
अश्वाइव सजित्वरीर्वीरुधः पारयि ष्णवः ॥ ३ ॥ ओषधीरिति मातरस्तद्वो देवीरु
पब्रुवे ॥ सनेयमश्वङ्गाँव्वास आत्मानन्तवपूरुष ॥ ४ ॥ अश्वत्थेवो निषदनम्पर्णे
वो वसतिष्कृता ॥ गोभाजइक्किलासथ यत्सनवथ पूरुषम् ॥ ५ ॥ यत्रौषधीस्सम
ग्मत राजानस्समिता इव ॥ विप्रस्स उच्यते भिषग्रक्षो हामीवचातनः ॥ ६ ॥
अश्वावती ँ सोमावतीमूर्जयन्तीमुदोजसम् ॥ आवित्सिसर्वा ओषधीरस्मा अरिष्ट
तातये ॥ ७ ॥ उच्छुष्मा ओषधीनाङ्गावो गोष्ठादिवेरते ॥ धन ँ सनिष्यन्तीना
मात्मानन्तव पूरुष ॥ ८ ॥ इष्कृतिर्नामवो माताथो यूय ँ स्थ निष्कृतीः ॥ सीराः

पतत्रिणीं स्थनयदामयतिनिष्कृथ ॥ ९ ॥ अति विश्वाः परिष्ठास्स्तेनइव व्रजम
क्रमुः ॥ ओषधीः प्राचुच्यवुर्यत्किञ्च तन्वो रपः ॥ १० ॥ यदिमा वाजयन्नहमोष
धीर्हस्त आदधे ॥ आत्मा यक्ष्मस्य नश्यतिपुरा जीवगृभो यथा ॥ ११ ॥ यस्यौ
षधीःप्रसर्पथाङ्गमङ्गम्परुष्परुः ॥ ततो यक्ष्मँव्विबाधध्व उग्रो मध्यमशीरिव ॥ १२ ॥
साकँय्यक्ष्मप्रपत चाषेण किकिदीविना ॥ साकँव्वातस्य ध्राज्या साकन्नश्य निहा
कया ॥ १३ ॥ अन्यावो अन्यामवत्वन्यान्यस्या उपावत ॥ तास्सर्वास्सँव्विदाना
इदम्मे प्रावतावचः ॥ १४ ॥ याः फलिनीर्याअफला अपुष्पायाश्च पुष्पिणीः ॥
बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वँहसः ॥ १५ ॥ मुञ्चन्तु मा शपथ्यादथो वरु
ण्यादुत ॥ अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥ १६ ॥ अवयतीस्सम
वदन्त दिव ओषधयस्परि ॥ यञ्जीवमश्नवामहै नस रिष्याति पूरुषः ॥ १७ ॥

या ओषधीस्सोमराज्ञीर्बह्वीश्शतविचक्षणाः ॥ तासामसि त्वमुत्तमारङ्कामाय श
ꣳहृदे ॥ १८ ॥ याओषधीस्सोमराज्ञीर्विष्ठिताः पृथिवीमनु ॥ बृहस्पतिप्रसूता अस्यै
सन्दत्त वीर्यम् ॥ १९ ॥ याश्चेदमुपश्रृण्वन्ति याश्चदूरम्परागताः ॥ सर्वास्सङ्गत्य
वीरुधोऽस्यै सन्दत्तवीर्यम् ॥ २० ॥ नाशयित्री बलासस्यार्शस उपचितामसि ॥
अथो शतस्य यक्ष्माणाम्पाकारोरसि नाशनी ॥ २१ ॥ मावो रिषत्खनिता यस्मै
चाहङ्खनामिवः ॥ द्विपच्चतुष्पदस्माकꣳसर्वमस्त्वनातुरम् ॥ २२ ॥ ओषधयस्सँ
व्वदन्ते सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तꣳराजन्पारयामसि ॥ २३ ॥
त्वाङ्गन्धर्वा अखनꣳस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वा
न्यक्ष्मादमुच्यत ॥ २४ ॥ त्वमुत्तमास्योषधे तववृक्षा उपस्तयः ॥ उपस्तिरस्तु
सोऽस्माकँय्यो अस्माँ२अभिदासति ॥ २५ ॥ ६

मामा हिꣳसीज्जनिता यः पृथिव्या योवा दिवꣳसत्यधर्मा व्यानट् ॥ यश्चा
पश्चन्द्राःप्रथमो जजान कस्मै देवाय हविषा विधेम ॥ १ ॥ अभ्यावर्तस्व पृथि
वि यज्ञेन पयसा सह ॥ वपान्ते अग्निरिषितो अरोहत् ॥ २ ॥ अग्ने यत्ते शु
क्रँय्यच्चन्द्रँय्यत्पूतँय्यच्च यज्ञियम् ॥ तद्देवेभ्यो भरामसि ॥ ३ ॥ इषमूर्जमह
मित आदमृतस्य योनिम्महिषस्य धाराम् ॥ आमा गोषु विशत्वातनूषु जहा
मि सेदिमनिराममीवाम् ॥ ४ ॥ अग्नेतव श्रवोवयो महि भ्राजन्ते अर्चयोविभा
वसो ॥ बृहद्भानो शवसा वाजमुक्थ्यन्दधासि दाशुषे कवे ॥ ५ ॥ पावकव
र्चाश्शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ॥ पुत्रोमातरा विचरन्नुपावसि पृ
णाक्षिरोदसी उभे ॥ ६ ॥ ऊर्जोनपाज्जातवेदस्सुशास्तिभिर्मन्दस्व धीतिभिर्हितः ॥
त्वे इषस्सन्दधुर्भूरि वर्पसश्चित्रोतयो वामजाताः ॥ ७ ॥ इरज्यन्नग्ने प्रथयस्व

जन्तुभिरस्मे रायोअमर्त्य ॥ सदर्शतस्य वपुषो विराजसि पृणाक्षि सानसिङ्क्र
तुम् ॥ ८ ॥ इष्कर्तारमध्वरस्य प्रचेतसङ्क्षयन्तꣳ राधसो महः ॥ रातिंव्वाम
स्यं सुभगाम्महीमिषन्दधासि सानसिꣳरयिम् ॥ ९ ॥ ऋतावानम्महिषँव्विश्व
दर्शतमग्निꣳ सुम्नायदधिरे पुरोजनाः ॥ श्रुत्कर्णꣳसप्रथस्तमन्त्वा गिरा दैव्यम्मा
नुषायुगा ॥ १० ॥ आप्यायस्व समेतुते विश्वतस्सोम वृष्ण्यम् ॥ भवा वा
जस्य सङ्गथे ॥ ११ ॥ सन्तेपयाꣳसि समुयन्तु वाजास्सँव्वृष्ण्यान्यभिमातिषा
हः ॥ आप्यायमानो अमृताय सोम दिविश्रवाꣳस्युत्तमानि धिष्व ॥ १२ ॥
आप्यायस्व मदिन्तम सोमविश्वेभिरꣳशुभिः ॥ भवानस्सप्रथस्तमस्सखावृधे ॥
१३ ॥ आते वत्सो मनो यमत्परमाच्चित्सधस्थात् ॥ अग्नेत्वाङ्कामया गिरा ॥
१४ ॥ तुभ्यन्ता अङ्गिरस्तमविश्वास्सुक्षितयः पृथक् ॥ अग्नेकामाय येमिरे ॥

१५ ॥ आग्नेः प्रियषु धामसुकामा भूतस्य भव्यस्य ॥ सम्राळकाविराजात ॥
१६ ॥ ७ ॥ हरिःॐ

इशानोऽष्टादश ॥ १८ ॥ दिवस्परिद्वादश ॥ १२ ॥ सामिधाग्निम्पञ्चदश ॥ १५ ॥
अपेतसप्तदश ॥ १७ ॥ असुन्वन्तन्त्रयोदश ॥ १३ ॥ याओषधीःपञ्चविंशतिः ॥
२५ ॥ मामाषोळश ॥ १६ ॥ सप्तानुवाकेषुषोळशोत्तरशतम् ॥ ११६ ॥ इतिशुक्ल
यजुर्वेदकाण्वसँहितापाठेत्रयोदशोऽध्यायः ॥ हरिःॐ

हरिःॐ ॥ मयि गृह्णाम्यग्रे अग्निंरायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥
मामु देवतास्सचन्ताम् ॥ १ ॥ अपाम्पृष्ठमसि योनिरग्नेस्समुद्रमभितः पिन्व
मानम् ॥ वर्धमानो महाँ२आच पुष्करे दिवोमात्रया वरिम्णा प्रथस्व ॥ २ ॥
ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्विसीमतस्सुरुचो वेन आवः ॥ सबुध्न्या उपमा अ

स्य विष्ठास्सतश्चयोनिमसतश्चविवः ॥ ३ ॥ हिरण्यगर्भस्समवर्त्तताग्रे भूतस्य जा
तः पतिरेक आसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधे
म ॥ ४ ॥ द्रप्सश्चस्कन्द पृथिवीमनुद्यामिमञ्च योनिमनु यश्च पूर्वः ॥ समा
नँय्योनिमनु सञ्चरन्तन्द्रप्सञ्जुहोम्यनु सप्त होत्राः ॥ ५ ॥ नमोऽस्तु सर्पेभ्यो
येकेच पृथिवीमनु ॥ येअन्तरिक्षेये दिवि तेभ्यस्सर्पेभ्यो नमः ॥ ६ ॥ याइषे
वो यातु धानानाँय्येवा वनस्पतीँरनु ॥ येवावटेषु शेरते तेभ्यस्सर्पेभ्यो नमः ॥
७ ॥ येवामी रोचने दिवो येवा सूर्यस्य रश्मिषु ॥ येषामप्सु सदस्कृतन्तेभ्य
स्सर्पेभ्यो नमः ॥ ८ ॥ कृणुष्व पाजः प्रसितिन्नपृथ्वीय्याहि राजेवाम वाँ२इभे
न ॥ तृष्वीमनु प्रसितिन्द्रूणानोऽस्तासिविध्य रक्षसस्तपिष्ठैः ॥ ९ ॥ तवभ्र
मास आशु यापतन्त्यनु स्पृशधृषता शोशुचानः ॥ तपूँष्यग्ने जुह्वा पतङ्गान

सन्दितो विसृज विष्वगुल्काः ॥ १० ॥ प्रतिस्पशो विसृजतूर्णि तमो भवा पा
युर्विशो अस्या अदब्धः ॥ योनो दूरे अघशꣳसोयो अन्त्यग्ने माकिष्टे व्यथिरा
दधर्षीत् ॥ ११ ॥ उदग्ने तिष्ठ प्रत्यातनुष्वन्यमित्राँ२ओषतात्तिग्महेते ॥ योनो
अरातिꣳसमिधानचक्रे नीचा तन्धक्ष्यतसन्नशुष्कम् ॥ १२ ॥ ऊर्ध्वो भव प्रति
विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ॥ अवस्थिरा तनुहि यातुजूनाञ्जामिमजा
मिम्प्रमृणीहिशत्रून् ॥ १३ ॥ अग्नेष्ट्वातेजसा सादयामि ॥ अग्निर्मूर्धा दिवःककु
त्पतिः पृथिव्याअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ इन्द्रस्यत्वौजसा सादया
मि ॥ १४ ॥ भुवो यज्ञस्य रजसश्चनेता यत्रानियुद्भिस्सचसे शिवाभिः ॥ दि
वि मूर्धानन्दधिषे स्वर्षाञ्जिह्वामग्ने चकृषे हव्यवाहम् ॥ १५ ॥ १
ध्रुवासि धरुणास्तृता विश्वकर्मणा ॥ मात्वा समुद्र उद्वधीन्मासुपर्णोऽव्यथ

माना पृथिवीन्दृꣳह ॥ १ ॥ प्रजापतिष्ट्वा सादयत्वपाम्पृष्ठे समुद्रस्येमन् ॥ व्य
चस्वतीम्प्रथस्वतीम्प्रथस्व पृथिव्यसि ॥ २ ॥ भूरसि भूमिरस्यदितिरसि वि
श्वधाया विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीय्यच्छ पृथिवीन्दृꣳह पृथिवीम्माहि
ꣳसीः ॥ ३ ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥
अग्निष्ट्वाभिपातु मह्या स्वस्त्याच्छर्दिषा शन्तमेनतया देवतयाङ्गिरस्वद्ध्रुवासी
द ॥ ४ ॥ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥ एवानो दूर्वे प्रतनु
सहस्रेण शतेनच ॥ ५ ॥ याशतेन प्रतनोषि सहस्रेण विरोहसि ॥ तस्यास्ते
देवीष्टके विधेमहविषावयम् ॥ ६ ॥ यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्तिरश्मि
भिः ॥ ताभिर्नो अद्यसर्वाभी रुचे जनाय नस्कृधि ॥ ७ ॥ यावो देवास्सूर्ये
रुचोगोष्वश्वेषु यारुचः ॥ इन्द्राग्नी ताभिस्सर्वाभी रुचन्नोधत्तबृहस्पते ॥ ८ ॥

विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् ॥ प्रजापतिष्ट्वा सादयतु पृष्ठेपृ
थिव्या ज्योतिष्मतीम् ॥ ९ ॥ विश्वस्मै प्राणायापानाय व्यानाय विश्वञ्ज्यो
तिर्यच्छ ॥ अग्निष्टेधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १० ॥ मधुश्च
माधवश्च वासन्तिका ऋतू अग्नेरन्तःश्लेषोऽसि ॥ कल्पैताम्द्यावापृथिवी कल्प
न्तामाप ओषधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्याय सव्रताः ॥ येअग्नयस्सम
नसोऽन्तरा द्यावापृथिवी इमे ॥ वासन्तिका ऋतू अभिकल्पमाना इन्द्रमिवदे
वा अभिसँविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ११ ॥ अषाढ्ळासि
सहमाना सहस्वारातीस्सहस्व पृतनायतः ॥ सहस्रवीर्यासि सामाजिन्व ॥ १२ ॥
सहस्वेमा अभिमातीस्सहस्व पृतनायतः ॥ सहस्व सर्वम्पाप्मानꣳ सहमाना
स्योषधे ॥ १३ ॥ २

मधु वाता ऋतायते मधुक्षरन्ति सिन्धवः ॥ माध्वीर्नस्सन्त्वोषधीः ॥ १ ॥
मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तु नःपिता ॥ २ ॥ मधु
मान्नो वनस्पतिर्मधुमाँ२अस्तु सूर्यः ॥ माध्वीर्गावो भवन्तुनः ॥ ३ ॥ अपा
ङ्गम्भन्त्सीदमात्वा सूर्योऽभिताप्सीन्माग्निर्वैश्वानरः ॥ अच्छिन्नपत्राः प्रजाअनु
वीक्षस्वानुत्वा दिव्या वृष्टिस्सचताम् ॥ ४ ॥ त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानपा
म्पतिर्वृषभ इष्टकानाम् ॥ पुरीषँव्वसानस्सुकृतस्य लोके तत्र गच्छ यत्रपूर्वेपरे
ताः ॥ ५ ॥ महीद्यौः पृथिवीचन इमँय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरी
माभिः ॥ ६ ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ॥ इन्द्रस्य युज्य
स्सखा ॥ ७ ॥ ध्रुवासि धरुणेतोजज्ञे प्रथममेभ्यो योनिभ्यो अधिजातवेदाः ॥
सगायत्र्या त्रिष्टुभानुष्टुभाच देवेभ्यो हव्यँव्वहतु प्रजानन् ॥ ८ ॥ इषेरायेर

मस्व सहसे द्युम्न ऊर्जे अपत्याय ॥ सम्राळसि स्वराळसि सारस्वतौ त्वोत्सौ
प्रावताम् ॥ ९ ॥ अग्ने युक्ष्वाहि येतवाश्वासो देवसाधवः ॥ अरँवहन्ति म
न्यवे ॥ १० ॥ युक्ष्वाहि देवहूतमाँ२ अश्वाँ२अग्ने रथीरिव ॥ निहोता पूर्व्य
स्सदः ॥ ११ ॥ ३

सम्यक्स्त्रवन्ति सरितो नधेना अन्तर्हृदा मनसा पूयमानाः ॥ घृतस्य धा
रा अभि चाकशीमि हिरण्ययो वेतसो मध्ये अग्नेः ॥ १ ॥ ऋचेत्वा रुचेत्वा
भासेत्वाज्योतिषेत्वा ॥ अभूदिदँविश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्यच ॥
२ ॥ अग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वान् ॥ सहस्रदा असि स
हस्रायत्वा ॥ ३ ॥ आदित्यङ्गर्भम्पयसा समङ्धिसहस्रस्य प्रतिमाँविश्वरूप
म् ॥ परिवृङ्धि हरसामाभिमँस्थाश्शतायुषङ्कृणुहि चीयमानः ॥ ४ ॥ वात

स्यजूतिंव्वरुणस्य नाभिमश्वञ्जज्ञानꣳसरिरस्य मध्ये ॥ शिशुन्नदीनाꣳहरिमद्रिबु
ध्नमग्ने माहिꣳसीःपरमे व्योमन् ॥ ५ ॥ अजस्रमिन्दुमरुषम्भुरण्युमग्निमीळे पू
र्वचित्तिन्नमोभिः ॥ सपर्वभिर्ऋतुशःकल्पमानो गाम्माहिꣳसीरदितिंव्विराजम् ॥
६ ॥ वरूत्रीन्त्वष्टुर्वरुणस्य नाभिमविञ्जज्ञानाꣳरजसःपरस्मात् ॥ महीꣳसाहस्त्री
मसुरस्य मायामग्ने माहिꣳसीः परमे व्योमन् ॥ ७ ॥ यो अग्निरग्नेरध्यजायत
शोकात्पृथिव्या उतवा दिवस्परि ॥ येनप्रजा विश्वकर्माजजान तमग्ने हेळःप
रिते वृणक्तु ॥ ८ ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ॥
आप्राद्यावापृथिवी अन्तरिक्षꣳसूर्य आत्मा जगतस्तस्थुषश्च ॥ ९ ॥ ४

इमम्माहिꣳसीर्द्विपादम्पशुꣳ सहस्राक्ष मेधाय चीयमानः ॥ मयुम्पशुम्मे
धमग्ने जुषस्वतेन चिन्वानस्तन्वो निषीद ॥ मयुन्ते शुगृच्छतु यन्द्विष्मस्त न्ते

शुग्गृच्छतु ॥ १ ॥ इमम्माहिँ॒सीरेकं शफम्पशुङ्कनिक्रदँ॒व्वाजिनँ॒व्वाजिनेषु ॥
गौरमारण्यमनुते दिशामितेन चिन्वानस्तन्वो निषीद ॥ गौरन्ते शुग्गृच्छतु य
न्द्विष्मस्तन्ते शुग्गृच्छतु ॥ २ ॥ इमँ॒साहस्रँ॒ शतधारमुत्सँ॒व्व्यच्यमानँ॒ सारि
रस्य मध्ये ॥ घृतन्दुहानामदितिञ्जनायाग्ने माहिँ॒सीः परमे व्योमन् ॥ गव
यमारण्यमनुते दिशामितेन चिन्वानस्तन्वो निषीद ॥ गवयन्ते शुग्गृच्छतुय
न्द्विष्मस्तन्ते शुग्गृच्छतु ॥ ३ ॥ इमम्मूर्णायुँ॒व्वरुणस्य नाभिन्त्वचम्पशूनान्द्विपदाञ्च
तुष्पदाम् ॥ त्वष्टुः प्रजानाम्प्रथमञ्जनित्रमग्ने माहिँ॒सीः परमे व्योमन् ॥ उ
ष्ट्रमारण्यमनुते दिशामितेन चिन्वानस्तन्वो निषीद ॥ उष्ट्रन्ते शुग्गृच्छतु य
न्द्विष्मस्तन्ते शुग्गृच्छतु ॥ ४ ॥ अजो ह्यग्नेरजनिष्टशोकात्सो अपश्यज्जनितार
मग्रे ॥ तेनदेवादेवतामग्रमायँ॒स्तेन रोहमायन्नुप मेध्यासः ॥ शरभमारण्य

मनुते दिशामितेनं चिन्वानस्तन्वो निषीद ॥ शरभन्ते शुग्गृच्छतु यन्द्विष्मस्त
न्ते शुग्गृच्छनु ॥ ५ ॥ त्वँय्यंविष्ठ दाशुषो नृँ॒ःपाहि शृणुधी गिरः ॥ रक्षातो
कमुतत्मना ॥ ६ ॥ ५

अपान्त्वेमन्त्सादयाम्यपान्त्वोद्मन्त्सादयाम्यपान्त्वा भस्मन्त्सादयामि ॥ अपा
न्त्वा ज्योतिंषि सादयाम्यपान्त्वायने सादयामि ॥ अर्णवेत्वा सदने सादयामि
समुद्रेत्वा सदने सादयामि सरिरेत्वा सदने सादयामि ॥ अपान्त्वा क्षयेसाद
याम्यपान्त्वा सधिषि सादयामि ॥ अपान्त्वा सदने सादयाम्यपान्त्वा सधस्थे
सादयाम्यपान्त्वा योनौ सादयामि ॥ अपान्त्वापुरीषेसादयाम्यपान्त्वापाथसिसा
दयामि ॥ गायत्रेणत्वाच्छन्दसासादयामित्रैष्टुभेनत्वाच्छन्दसासादयामि जागतेन
त्वा च्छन्दसा सादयामि ॥ आनुष्टुभेनत्वा च्छन्दसा सादयामि पाङ्क्तेनत्वा च्छ

न्द्सा सादयामि ॥१॥ ६

अयम्पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनः॥ गायत्री वासन्ती ॥ १ ॥ गायत्र्यै गायत्रङ्गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतो रथन्तरम् ॥ वसिष्ठऋषिः प्रजापतिगृहीतया त्वया प्राणङ्गृह्णामि प्रजाभ्यः ॥ २ ॥ अयन्दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणम् ॥ ग्रीष्मो मानसस्त्रिष्टुब्ग्रैष्मी ॥ ३ ॥ त्रिष्टुभस्स्वारꣳस्वारादन्तर्यामोन्तर्यामात्पञ्चदशः पञ्चदशाद्बृहत् ॥ भरद्वाजऋषिः प्रजापतिगृहीतया त्वया मनोगृह्णामि प्रजाभ्यः ॥ ४ ॥ अयम्पश्चाद्विश्वव्यचास्तस्यचक्षुर्वैश्वव्यचसम् ॥ वर्षाश्चाक्षुष्यो जगती वार्षी ॥ ५ ॥ जगत्याऋक्समम्मृक्समाच्छुक्रश्शुक्रात्सप्तदशस्सप्तदशाद्वैरूपम् ॥ जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः ॥ ६ ॥ इदमुत्तरात्स्वस्तस्य श्रोत्रꣳसौवम् ॥ शरच्छ्रौत्र्यनु

ष्टुपूछोरदी ॥ ७ ॥ अनुष्टुभं ऐळमैळान्मन्थी मन्थिनं एकविꣳश एकविꣳशाद्वैरा जम् ॥ विश्वामित्रऋषिः प्रजापतिगृहीतया त्वया श्रोत्रङ्गृह्णामि प्रजाभ्यः ॥ ८ ॥ इयमुपरि मतिस्तस्यै वाङ्माता ॥ हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती ॥ ९ ॥ पङ्क्त्यै निधनवन्निधनवत आग्रयण आग्रयणात्त्रिणवत्रयस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते ॥ विश्वकर्मऋषिः प्रजापतिगृहीतया त्वया वाचङ्गृह्णामि प्रजाभ्यः ॥ लोकम्पृणताअस्येन्द्रँ्विश्वाः ॥ १० ॥ ७ ॥ हरिः ॐ

मयिगृह्णामिपञ्चदश ॥ १५ ॥ ध्रुवासित्रयोदश ॥ १३ ॥ मधुवाताएकादश ॥ ११ ॥ सम्यवस्त्रवन्तिनव ॥ ९ ॥ इमम्माषट् ॥ ६ ॥ अपान्त्वेक ॥ १ ॥ अयम्पुरोदश ॥ १० ॥ सप्तानुवाकेषुपञ्चषष्टिः ॥ ६५ ॥ इति शुक्लयजुर्वेदकाण्व सँहितापाठे चतुर्दशोऽध्यायः ॥ हरिः ॐ

हरिः ॐ ॥ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवँय्योनिमासीद साधुया ॥ उख्यस्य केतुम्प्रथमञ्जुषाणाश्विनाध्वर्यू सादयतामिह त्वा ॥ १ ॥ कुलायिनी घृतवती पुरन्धिस्स्योनेसीद सदने पृथिव्याः ॥ अभित्वा रुद्रा वसवो गृणन्त्विमा ब्रह्मपीपिहि सौभगायाश्विनाध्वर्यूसादयतामिह त्वा ॥ २ ॥ स्वैर्दक्षैर्दक्षपितेह सीद देवानाँ सुम्ने बृहते रणाय ॥ पितेवैधि सूनव आसुशेवा स्वावेशा तन्वा सँविशस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥ ३ ॥ पृथिव्याःपुरीषमस्यप्सोनामतान्त्वा विश्वे अभिगृणन्तु देवाः ॥ स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्वाश्विनाध्वर्यू सादयतामिहत्वा ॥ ४ ॥ अदित्यास्त्वा पृष्ठेसादयाम्यन्तरिक्षस्य धर्त्रीँ विष्टम्भनीन्दिशामधिपत्नीम्भुवनानाम् ॥ ऊर्मिर्द्रप्सो अपामसि विश्वकर्मातऋषिरश्विनाध्वर्यू सादयतामिहत्वा ॥ शुक्रश्च शुचिश्चग्रैष्मा

ऋतू अग्नेरन्तः श्लेषोऽसि ॥ कल्पेतान्द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ॥ येअग्नयस्समनसोऽन्तरा द्यावापृथिवी इमे ॥ ग्रैष्मावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसँविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ५ ॥ १ ॥

सजूर्ऋतुभिस्सजूर्विधाभिस्सजूर्देवैस्सजूर्देवैर्वयोनाधैः ॥ अग्नयेत्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिहत्वा ॥ सजूर्ऋतुभिस्सजूर्विधाभिस्सजूर्वसुभिस्सजूर्देवैर्वयोनाधैः ॥ अग्नयेत्वा वैश्वानरायाश्विनाध्वर्यूसादयतामिहत्वा ॥ सजूर्ऋतुभिस्सजूर्विधाभिस्सजू रुद्रैस्सजूर्देवैर्वयोनाधैः ॥ अग्नयेत्वा वैश्वानरायाश्विनाध्वर्यूसादयतामिहत्वा ॥ सजूर्ऋतुभिस्सजूर्विधाभिस्सजूरादित्यैस्सजूर्देवैर्वयोनाधैः ॥ अग्नयेत्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिहत्वा ॥ सजूर्ऋतुभि

स्सजूर्विधाभिस्सजूर्विश्वैर्देवैस्सजूर्देवैर्वयोनाधैः ॥ अग्नयेत्वा वैश्वानरायाश्विना ध्वर्यू सादयतामिहत्वा ॥ १ ॥ प्राणम्मे पाह्यपानम्मे पाहि व्यानम्मे पाहि ॥ चक्षुर्म उर्व्याविभाहि श्रोत्रम्मे श्लोकय ॥ २ ॥ अपः पिन्वौषधीर्जिन्व द्विपाद वचतुष्पात्पाहि ॥ दिवो वृष्टिमेरया ॥ ३ ॥ २ ॥

मूर्धा वयः प्रजापतिश्छन्दःक्षत्रँवयो मयन्दञ्छन्दः ॥ विष्टम्भो वयोऽधि प तिश्छन्दो विश्वकर्मावयःपरमेष्ठीच्छन्दः ॥ १ ॥ बस्तोवयो विवलञ्छन्दो वृष्णि र्वयो विशालञ्छन्दः ॥ पुरुषो वयस्तन्द्रञ्छन्दो व्याघ्रोवयोना धृष्टञ्छन्दः ॥ २ ॥ सिँहो वयश्छदिश्छन्दः पष्ठवाड्वयो बृहतीच्छन्दः ॥ उक्षावयः ककुप्छन्दऋ षभो वयस्सतो बृहतीच्छन्दः ॥ ३ ॥ अनड्वान्वयः पङ्क्तिश्छन्दो धेनुर्वयो जगतीच्छन्दः ॥ त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्यवाड्वयोविराट्छन्दः ॥ ४ ॥ पञ्चा

विर्वयो गायत्रीच्छन्दस्त्रिवत्सो वयं उष्णिक् छन्दः ॥ तुर्यवाड्वयोऽनुष्टुप्छन्दो
लोकम्पृणता अस्येन्द्रँविश्वाः ॥ ५ ॥ ३ ॥

इन्द्राग्नी अव्यथमानामिष्टकान्दृꣳहतँय्युवम् ॥ पृष्ठेन द्यावापृथिवी अन्तरि
क्षञ्चविबाधसे ॥ १ ॥ विश्वकर्मात्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीम्प्रथ
स्वतीम् ॥ अन्तरिक्षँय्यच्छान्तरिक्षन्दृꣳहान्तरिक्षम्मा हिꣳसीः ॥ विश्वस्मै
प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥ वायुष्ट्वाभिपातु मह्या
स्वस्त्या च्छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ २ ॥ राज्ञ्यसिप्राची
दिग्विराळसि दक्षिणादिक्सम्राळसि प्रतीची दिक्स्वराळस्युदीची दिगधिपत्न्य
सि बृहतीदिक् ॥ विश्वकर्मात्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ॥ वि
श्वस्मै प्राणायापानाय व्यानाय विश्वञ्ज्योतिर्यच्छ ॥ वायुष्टेऽधिपतिस्तयादेव

तयाङ्गिरस्वद्ध्रुवासीद ॥ नभश्च नभस्यश्च वार्षिका ऋतू अग्नेरन्तः श्लेषोऽसि ॥
कल्पेतान्द्यावापृथिवीकल्पन्तामापओषधयः कल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्याय स
व्रताः ॥ येअग्नयस्समनसोऽन्तरा द्यावापृथिवी इमे ॥ वार्षिका ऋतू अभिक
ल्पमाना इन्द्रमिवदेवा अभिसँविशन्तुतया देवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ इ
षश्चोर्जश्च शारदा ऋतूअग्नेरन्तःश्लेषोऽसि ॥ कल्पेतान्द्यावापृथिवी कल्पन्तामा
पओषधयः कल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्याय सव्रताः ॥ येअग्नयस्समनसोऽन्त
राद्यावापृथिवी इमे ॥ शारदा ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसँवि
शन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ३ ॥ ४

आयुर्मेपाहिप्राणम्मेपाह्यपानम्मेपाहिव्यानम्मेपाहि॥ चक्षुर्मेपाहि श्रोत्रम्मेपाहि
वाचम्मेपिन्वमनोमेजिन्वात्मानम्मेपाहिज्योतिर्मेयच्छ ॥ १ ॥ माच्छन्दः प्रमाच्छ

न्दः प्रतिमाच्छन्दो अस्त्री वयश्छन्दः ॥ पङ्क्तिश्छन्दउष्णिक्छन्दः ॥ २ ॥ बृहतीच्छन्दोऽनुष्टुप्छन्दो विराट्छन्दो गायत्रीच्छन्दः ॥ त्रिष्टुप्छन्दो जगतीच्छन्दः ॥ ३ ॥ पृथिवीच्छन्दोऽन्तरिक्षञ्छन्दो द्यौश्छन्दस्समाश्छन्दः ॥ नक्षत्राणिच्छन्दो वाक्छन्दः ॥ ४ ॥ मनश्छन्दः कृषिश्छन्दो हिरण्यञ्छन्दो गौश्छन्दः ॥ अजाच्छन्दोऽश्वश्छन्दः ॥ ५ ॥ अग्निर्देवता वातोदेवता सूर्योदेवता चन्द्रमादेवता ॥ वसवोदेवता रुद्रादेवता ॥ आदित्या देवता मरुतोदेवता विश्वेदेवादेवता बृहस्पतिर्देवता ॥ इन्द्रोदेवता वरुणोदेवता ॥ ६ ॥ ५

मूर्धासि राड्ध्रुवासि धरुणा धर्त्र्यसिधरणी ॥ आयुषेत्वा वर्चसेत्वा कृष्यैत्वा क्षेमायत्वा ॥ १ ॥ यन्त्रीराड्यन्त्र्यसि यमनी ध्रुवासि धरित्री ॥ इषेत्वोर्जेत्वा रय्यैत्वा पोषायत्वा ॥ लोकम्पृणता अस्येन्द्रँव्विश्वाः ॥ २ ॥ ६

आशुस्त्रिवृद्भान्तः पञ्चदशोव्योमा सप्तदशो धरुणं एकविꣳशः प्रतूर्तिरष्टादशः ॥ तपो नवदशोऽभीवर्तस्सविꣳशो वर्चो द्वाविꣳशस्सम्भरणस्त्रयोविꣳशो योनिश्चतुर्विꣳशः ॥ १ ॥ गर्भाः पञ्चविꣳश ओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठात्रयस्त्रिꣳशो ब्रध्नस्य विष्टपञ्चतुस्त्रिꣳशः ॥ नाकःषट्त्रिꣳशो विवर्तोऽष्टाचत्वारिꣳशो धर्त्रञ्चतुष्टोमः ॥ २ ॥ ७

अग्नेर्भागोऽसि दीक्षाया आधिपत्यम्ब्रह्मस्पृतन्त्रिवृत्स्तोमः ॥ इन्द्रस्य भागोऽसि विष्णोराधिपत्यङ्क्षत्रꣳस्पृतम्पञ्चदशस्तोमः ॥ १ ॥ नृचक्षसाम्भागोऽसि धातुराधिपत्यञ्जनित्रꣳस्पृतꣳसप्तदशस्तोमः ॥ मित्रस्य भागोऽसि वरुणस्याधिपत्यन्दिवो वृष्टिर्वातस्पृत एकविꣳशस्तोमः ॥ २ ॥ वसूनाम्भागोऽसि रुद्राणामाधिपत्यञ्चतुष्पात्स्पृतञ्चतुर्विꣳशस्तोमः ॥ आदित्यानाम्भागोऽसि मरुता

माधिपत्यङ्गर्भीस्पृताः पञ्चविꣳशस्तोमः ॥ ३ ॥ अदितेर्भागोऽसि पूष्ण आधि
पत्यमोजस्पृतन्त्रिणवस्तोमः ॥ देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ स
मीचीर्दिशस्पृताश्चतुष्टोमस्तोमः ॥ ४ ॥ यवानाम्भागोऽस्ययवानामाधिपत्यम्प्र
जास्पृताश्चतुश्चत्वारिꣳशस्तोमः ॥ ऋभूणाम्भागोऽसि विश्वेषान्देवानामाधिप
त्यम्भूतꣳस्पृतन्त्रयस्त्रिꣳशस्तोमः ॥ सहश्च सहस्यश्च हैमन्तिका ऋतूअग्नेरन्तः
श्लेषोऽसि ॥ कल्पेतान्द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृ
थङ्ममज्यैष्ठ्याय सव्रताः ॥ ये अग्नयस्समनसोऽन्तरा द्यावापृथिवी इमे ॥ हैम
न्तिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसँविशन्तु तयादेवतयाङ्गि
रस्वद्ध्रुवेसीदतम् ॥ ५ ॥ ८

एकयास्तुवत प्रजाअधीयन्त प्रजापतिरधिपतिरासीत्तिस्ृभिरस्तुवत ब्रह्मास्ृ

ज्यत ब्रह्मणस्पतिरधिपतिरासीत् ॥ पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूताना
म्पतिरधिपतिरासीत्सप्तभिरस्तुवत सप्तऋषयोऽसृज्यन्त धाताधिपतिरासीत् ॥ १ ॥
नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवत ऋतवोऽसृ
ज्यन्तार्त्तवा अधिपतय आसन् ॥ त्रयोदशभिरस्तुवत मासा असृज्यन्त सँव्व
त्सरोऽधिपतिरासीत्पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत् ॥ २ ॥ स
प्तदशभिरस्तुवत ग्राम्याः पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभिरस्तु
वत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्ताम् ॥ एकविँशत्यास्तुवतैक
शफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्त्रयोविँशत्यास्तुवत क्षुद्राःपशवोऽसृ
ज्यन्त पूषाधिपतिरासीत् ॥ ३ ॥ पञ्चविँशत्यास्तुवतारण्याःपशवोऽसृज्यन्त
वायुरधिपतिरासीत्सप्तविँशत्यास्तुवत द्यावापृथिवी व्यैताँव्वसवो रुद्राआदित्या

अनुव्यायꣳस्त एवाधिपतयआसन् ॥ नवविꣳशत्यास्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदेकविꣳशतास्तुवत प्रजाअसृज्यन्त यवाश्चाय वाश्चाधिपतय आसन् ॥ त्रयस्त्रिꣳशतास्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥ लोकम्पृणता अस्येन्द्रँविश्वाः ॥ ४ ॥ ९ ॥ हरिःॐ

ध्रुवाक्षितिःपञ्च ॥ ५ ॥ सजूर्ऋतुभिस्तिस्रः ॥ ३ ॥ मूर्धावयःपञ्च ॥ ५ ॥ इन्द्राग्नीतिस्रः ॥ ३ ॥ आयुर्मेषट् ॥ ६ ॥ मूर्धासिद्वे ॥ २ ॥ आशुश्च ॥ २ ॥ अग्नेर्भागःपञ्च ॥ ५ ॥ एकयाचतस्रः ॥ ४ ॥ नवानुवाकेषुपञ्चत्रिꣳशत् ॥ ३५ ॥ इतिशुक्लयजुर्वेदकाण्वसँहितापाठेपञ्चदशोऽध्यायः ॥ हरिःॐ

हरिः ॐ ॥ अग्ने जातान्प्रणुदानस्सपत्नान्प्रत्यजाताञ्जातवेदोनुदस्व ॥ अधिनो ब्रूहि सुमना अहेळꣳस्तवस्यामशर्मꣳस्त्रिवरूथ उद्भौ ॥ १ ॥ सहसा जा

तान्प्रणुदानस्सपत्नान्प्रत्यजातान्नुद जातवेदः ॥ आधिनो ब्रूहिसुमनस्यमानो वय

ᳲस्याम प्रणुदानस्सपत्नान् ॥ षोळशी स्तोम ओजो द्रविणञ्चतुश्चत्वारिᳲशस्तो

मोवर्चोद्रविणम्॥ २ ॥ अग्नेः पुरीषमस्यप्सोना मतान्त्वा विश्वे अभिगृणन्तुदेवाः॥

स्तोम पृष्ठा घृतवती हसीद प्रजावदस्मे द्रविणायजस्व ॥ ३ ॥ एवश्छन्दो वरि

वश्छन्दश्शम्भूश्छन्दः परिभूश्छन्दः ॥ आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः

॥ ४ ॥ सिन्धुश्छन्दस्समुद्रश्छन्दस्सरिरञ्छन्दः ॥ ककुप् छन्दस्त्रि ककुप् छन्दः

काव्यञ्छन्दो अङ्कुपञ्छन्दः ॥ ५ ॥ अक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टा

रपङ्क्तिश्छन्दः क्षुरोभ्रजश्छन्दः ॥ आच्छच्छन्दःप्रच्छच्छन्दःसँय्यच्छन्दो वियच्छ

न्दः ॥ ६ ॥ बृहच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवधश्छन्दः ॥ गिरश्छ

न्दोभ्रजश्छन्दस्सᳲस्तुप् च्छन्दोऽनुष्टुप् छन्दः ॥७॥ एवश्छन्दो वरिवश्छन्दो

वयश्छन्दो वयस्कृच्छन्दः ॥ विष्पर्धाश्छन्दो विशालञ्छन्दश्छदिश्छन्दो दूरोहण
ञ्छन्दः ॥ तन्द्रञ्छन्दो अङ्काङ्कञ्छन्दः ॥ ८ ॥ १

रश्मिना सत्याय सत्याञ्जिन्वप्रेतिना धर्मणा धर्मञ्जिन्व ॥ अन्वित्यादिवा
दिवञ्जिन्व सन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्व ॥ १ ॥ प्रतिधिना पृथिव्या पृथि
वीञ्जिन्वविष्टम्भेन वृष्ट्या वृष्टिञ्जिन्व ॥ प्रवयाह्वाहर्जिन्वानुयारात्र्या रात्रीञ्जि
न्व ॥ २ ॥ उशिजा वसुभ्यो वसूञ्जिन्व प्रकेतेनादित्येभ्यआदित्याञ्जिन्व ॥
तन्तुं नारायस्पोषेण रायस्पोषञ्जिन्वसꣳ सर्पेण श्रुताय श्रुतञ्जिन्व ॥ ३ ॥
ऐळेनौषधीभिरोषधीर्जिन्वोत्तमेन तनूभिस्तनूर्जिन्व ॥ वयोधसाधीतेनाधीतञ्जि
न्वाभि जिना तेजसा तेजोजिन्व ॥ ४ ॥ प्रतिपदसि प्राति पदेत्वानुपदस्यनुपदे
त्वा ॥ सम्पदासि सम्पदेत्वा तेजोऽसि तेजसेत्वा ॥ ५ ॥ त्रिवृदसित्रिवृतेत्वा

प्रवृद॑सि प्रवृतै॑त्वा ॥ विवृद॑सि विवृतै॑त्वा सवृद॑सि सवृतै॑त्वा ॥ ६ ॥ आक्रमो॑ऽस्या क्रमाय॑त्वा सङ्क्रमो॑ऽसि सङ्क्रमाय॑त्वा ॥ उत्क्रमो॑ऽस्युत्क्रमाय त्वोत्क्रान्तिरस्युत्क्रान्त्यै॑त्वा ॥ अधि॑पतिनोर्जोर्ज॑ञ्जिन्ववर्ष॑श्रीः क्षत्राय॑क्षत्रञ्जिन्व ॥ ७ ॥ २

राज्ञ्य॑सि प्राची दिग्वस॑वस्ते दे॒वा अधि॑पतयः ॥ अग्निर्हे॑तीनाम्प्र॑तिधर्ता ॥१॥ त्रिवृत्त्वा स्तोम॑ः पृथिव्याꣳश्र॑यत्वाज्य॑ मुक्थमव्य॑थायै स्तभ्नातु ॥ रथन्तरꣳसाम प्रतिष्ठित्या अन्तरि॑क्षे ॥ २ ॥ ऋष॑यस्त्वा प्रथमजा दे॒वेषु दि॒वो मात्रया वरि॑म्णा प्र॑थन्तु ॥ विधर्ता चायमधि॑पतिश्चते त्वासर्वे॑ सꣳविदाना नाक॑स्य पृष्ठे स्वर्गे लोके यज॑मानञ्च सादयन्तु ॥ ३ ॥ विराळ॑सि दक्षिणा दिग्रुद्रास्ते॑ दे॒वा अधि॑पतयः ॥ इन्द्रोहे॑तीनाम्प्र॑तिधर्ता ॥ ४ ॥ पञ्चदशस्त्वा स्तोम॑ः पृथिव्याꣳश्र॑यतु प्रउगमुक्थमव्य॑थायै स्तभ्नातु ॥ बृहत्साम प्रतिष्ठित्या अन्तरि॑

क्षे ॥ ५ ॥ ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रयावरिम्णा प्रथन्तु ॥ वि
धर्ता चायमधिपतिश्चते त्वासर्वे सँविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च
सादयन्तु ॥ ६ ॥ सम्राळसि प्रतीची दिगादित्यास्ते देवा अधिपतयः ॥ वरु
णो हेतीनाम्प्रतिधर्ता ॥ ७ ॥ सप्तदशस्त्वास्तोमः पृथिव्याँश्रयतु मरुत्वतीयमु
क्थमव्यथायै स्तभ्नातु ॥ वैरूपँ सामप्रतिष्ठित्या अन्तरिक्षे ॥ ८ ॥ ऋषयस्त्वा
प्रथमजादेवेषुदिवो मात्रयावरिम्णा प्रथन्तु ॥ विधर्ता चायमधिपतिश्चते त्वा
सर्वे सँविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च सादयन्तु ॥ ९ ॥ स्वराळ
स्युदीची दिङ्मरुतस्ते देवा अधिपतयः ॥ सोमो हेतीनाम्प्रतिधर्ता ॥ १० ॥ ए
कविँशस्त्वास्तोमः पृथिव्याँश्रयतु निष्केवल्य मुक्थमव्यथायै स्तभ्नातु ॥ वैरा
जँ सामप्रतिष्ठित्या अन्तरिक्षे ॥ ११ ॥ ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्र

यावरिम्णा प्रथन्तु ॥ विधर्ता चायमधिपतिश्च तेत्वा सर्वैसँव्विदाना नाकस्य
पृष्ठे स्वर्गेलोके यजमानञ्चसादयन्तु ॥ १२ ॥ अधि पन्त्यासि बृहती दिग्विश्वे
ते देवाअधिपतयः ॥ बृहस्पतिर्हेतीनाम्प्रतिधर्ता ॥ १३ ॥ त्रिणवत्रयस्त्रिँशौ
त्वास्तोमौ पृथिव्याँश्रयताँव्वैश्वदेवाग्निमारुते उक्थेअव्यथायै स्तभ्नीताम् ॥
शाक्करैवते सामनी प्रतिष्ठित्याअन्तरिक्षे ॥ १४ ॥ ऋषयस्त्वा प्रथमजा देवेषु
दिवोमात्रया वरिम्णाप्रथन्तु ॥ विधर्ता चायमधिपतिश्चते त्वासर्वे सँव्विदाना
नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च सादयन्तु ॥ १५ ॥ ३

अयम्पुरो हरिकेशस्सूर्यरश्मिस्तस्य रथ गृत्सश्च रथौजाश्चसेनानीग्रामण्यौ ॥
पुञ्जिकस्थलाचं क्रतुस्थलाचाप्सरसौ दङ्क्ष्णवः पशवोहेतिः पौरुषेयो वधः प्रहे
तिः ॥ १ ॥ तेभ्योनमो अस्तु तेनोमृळयन्तु तेनोवन्तु ॥ तेयन्द्विष्मोयश्च

नोद्वेष्टि तमैषाञ्जम्भेदध्मः ॥ २ ॥ अयन्दक्षिणा विश्वकर्मा तस्यरथस्व नश्च
रथे चित्रश्चसेनानीग्रामण्यौ ॥ मेनकाच सहजन्या चाप्सरसौ यातुधाना हेतीर
क्षाꣳसि प्रहेतिः ॥३॥ तेभ्योनमो अस्तु तेनोमृळयन्तु तेनोवन्तु॥ तेयन्द्विष्मो य
श्चनोद्वेष्टि तमैषाञ्जम्भेदध्मः ॥४॥ अयम्पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चास
मरथश्चसेनानीग्रामण्यौ ॥ प्रम्लोचन्तीचानुम्लोचन्तीचाप्सरसौ व्याघ्राहेतिः स
र्पाःप्रहेतिः ॥५॥ तेभ्योनमो अस्तु तेनोमृळयन्तु तेनोवन्तु ॥ तेयन्द्विष्मो यश्च
नोद्वेष्टि तमैषाञ्जम्भेदध्मः ॥ ६ ॥ अयमुत्तरा त्सँय्यद्वसुस्तस्यतार्क्ष्यश्चारिष्टने
मिश्च सेनानीग्रामण्यौ ॥ विश्वाचीच घृताचीचाप्सरसा आपोहेतिर्वातः प्रहे
तिः ॥ ७ ॥ तेभ्योनमो अस्तु तेनोमृळयन्तु तेनोवन्तु ॥ तेयन्द्विष्मो यश्च
नोद्वेष्टि तमैषाञ्जम्भेदध्मः ॥ ८ ॥ अयमुपर्यर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्च

सेनानीग्रामण्यौ ॥ उर्वशींच पूर्वचित्तिश्चाप्सरसा अवस्फूर्जन्हेति विंद्युत्प्रहे
तिः ॥ ९ ॥ तेभ्योनमो अस्तु तेनोमृळयन्तु तेनोऽवन्तु ॥ तेयन्द्विष्मो यश्च
नोद्वेष्टि तमेषाञ्जम्भेदध्मः ॥ १० ॥ ४ ॥

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ॥ अपाᳪं रेताᳪं सिजिन्वति॥१॥
अयमग्निस्सहस्त्रिणो वाजस्य शतिनस्पतिः ॥ मूर्धाकवी रयीणाम् ॥ २ ॥ त्वाम
ग्ने पुष्करादध्यथर्वा निरमन्थत ॥ मूर्ध्नो विश्वस्य वाघतः ॥ ३ ॥ भुवोयज्ञ
स्य रजसश्चनेता यत्रा नियुद्भिस्सचसे शिवाभिः ॥ दिविमूर्धानन्दधिषे स्वर्षा
ञ्जिह्वामग्ने चकृषे हव्यवाहम् ॥ ४ ॥ अबोध्यग्निस्समिधा जनानाम्प्रति धेनु
मिवायतीमुषासम् ॥ यह्वाइव प्रवयामुज्जिहानाः प्रभानवस्सिस्रते नाकमच्छ
॥ ५ ॥ अवोचाम कवये मेध्याय वचो वन्दारुवृषभाय वृष्णे ॥ गविष्ठिरो न

मसा स्तोमममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् ॥ ६ ॥ अयमिह प्रथमोधायिधा
तृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ॥ यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रँव्वि
भ्वँव्विशेविशे ॥ ७ ॥ जनस्य गोपा अजनिष्ट जागृवि रग्निस्सुदक्षस्सुवितायन
व्यसे ॥ घृतप्रतीको बृहतादिविस्पृशाद्युमद्विभाति भरतेभ्यःशुचिः ॥ ८ ॥ त्वा
मग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणँव्वनेवने ॥ सजायसे मथ्यमान
स्सहो महत्त्वामाहुस्सहसस्पुत्रमङ्गिरः ॥ ९ ॥ सखायस्सँव्वस्सम्यञ्चमिषँ स्तो
मञ्चाग्नये ॥ वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥ १० ॥ सँसमिद्युवसे
वृषन्नग्ने विश्वान्यर्यआ ॥ इळस्पदे समिध्यसे सनो वसून्याभरा ॥ ११ ॥ त्वा
मग्ने हविष्मन्तो देवम्मर्तास ईळते ॥ मन्येत्वा जातवेदसँ सहव्यावक्ष्यानुष
क् ॥ १२ ॥ त्वाश्विलश्रवस्तमहवन्ते विक्षुजन्तवः ॥ शोचिष्केशम्पुरुप्रियाग्ने

हव्याय वोढ्ळवे ॥ १३ ॥ एनावो अग्निन्नमसोर्जोनपातमाहुवे ॥ प्रियञ्चेति
ष्ठमरतिँ स्वध्वरँविश्वस्य दूतममृतम् ॥ १४ ॥ विश्वस्य दूतममृतँविश्वस्यदू
तममृतम् ॥ सयोजते अरुषा विश्वभोजसा सदुद्रवत्स्वाहुतः ॥ १५ ॥ सदु
द्रवत्स्वाहुतस्सदुद्रवत्स्वाहुतः ॥ सुब्रह्मा यज्ञस्सुशमी वसूनान्देवँराधो जना
नाम् ॥ १६ ॥ अग्ने वाजस्य गोमत ईशानस्सहसोयहो ॥ अस्मेधेहि जातवे
दो महिश्रवः ॥ १७ ॥ सईधानो वसुष्कविरग्निरीळेन्यो गिरा ॥ रेवदस्मभ्य
म्पुर्वणीकदीदिहि ॥ १८ ॥ क्षपोराजन्नुत त्मनाग्नेवस्तोरुतोषसः ॥ सतिग्म
जम्भ रक्षसोदह प्रति ॥ १९ ॥ भद्रोनो अग्निराहुतो भद्रारातिस्सुभगभद्रोअ
ध्वरः ॥ भद्रा उतप्रशस्तयः ॥ २० ॥ भद्रा उतप्रशस्तयो भद्रम्मनः कृणुष्व
वृत्रतूर्ये ॥ येनासमत्सु सासहः ॥ २१ ॥ येना समत्सु सासहोऽवस्थिरा तनु

हि भूरिशर्धताम् ॥ वनेमाते अभिष्टिभिः ॥ २२ ॥ अग्निन्तम्मन्येयोवसुरस्तँ
य्यँय्यन्ति धेनवः ॥ अस्तमर्वन्त आशवोऽस्तन्नित्यासो वाजिन इषꣳस्तोतृभ्य
आभर ॥ २३ ॥ सोअग्निर्यो वसुर्गृणे सँय्यमायन्ति धेनवः ॥ समर्वन्तो रघु
द्रुवस्सꣳसुजातासस्सूरयइषꣳस्तोतृभ्य आभर ॥ २४ ॥ उभेसुश्चन्द्र सर्पिषोद
र्वीश्रीणीष आसनि ॥ उतोन उत्पुपूर्या उक्थेषु शवसस्पत इषꣳस्तोतृभ्य आ
भर ॥ २५ ॥ अग्नेतमद्या श्वन्नस्तोमैः क्रतुन्नभद्रꣳहृदिस्पृशम् ॥ ऋध्यामात
ओहैः ॥ २६ ॥ अधाह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ॥ रथीर्ऋतस्य बृहतो
बभूथ ॥ २७ ॥ एभिर्नो अर्कैर्भवानो अर्वाङ्स्वर्णज्योतिः ॥ अग्नेविश्वेभिस्सु
मनाअनीकैः ॥ २८ ॥ अग्निꣳहोतारम्मन्येदास्वन्तँव्वसुꣳसूनुꣳसहसो जातवे
दसँव्विप्रन्न जातवेदसम् ॥ यऊर्ध्वयास्वध्वरो देवो देवाच्या कृपा ॥ घृतस्य

विभ्राष्टि मनुवष्टि शोचिषा जुह्वानस्य सर्पिषः ॥ २९ ॥ अग्ने त्वन्नो अन्तम उ
त्त्राता शिवोभवा वरूथ्यः ॥ वसुरग्निर्वसुश्रवाअच्छानाक्षिद्युमत्तमꣳरयिन्दाः ॥
तन्त्वा शोचिष्ठदीदिवस्सुम्नाय नूनमीमहे सखिभ्यः ॥ ३० ॥ ५

येन ऋषय स्तपसा सत्रमायन्निन्धाना अग्निꣳस्वराभरन्तः॥ तस्मिन्नहान्निदधे
नाके अग्निंय्यमाहुर्मनवस्तीर्णबर्हिषम् ॥ १ ॥ तम्पत्नीभिरनु गच्छेमदेवाः पुत्रै
र्भ्रातृभिरुतवा हिरण्यैः ॥ नाकङ्गृभ्णानास्सुकृतस्य लोके तृतीये पृष्ठे अधिरोच
ने दिवः ॥२॥ आवाचो मध्यमरुहद्भुरण्युरयमग्निस्सत्पतिश्चेकितानः ॥ पृष्ठे पृथि
व्या निहितो दविद्युतदधस्पदङ्कृणुतांय्ये पृतन्यवः ॥३॥ अयमग्निर्वीरतमो वयो
धास्सहस्त्रियो द्योततामप्रयुच्छन् ॥ विभ्राजमा नस्सरिरस्य मध्य उपप्रया
हिदिव्यानि धाम ॥ ४ ॥ सम्प्रच्यवध्वमुप सम्प्रया ताग्ने पथोदेव याना

न्कृणुध्वम् ॥ पुनः कृण्वाना पितरा युवानान्वाताꣳसीत्त्वयि तन्तुमेत
म् ॥ ५ ॥ उद्बुध्यस्वाग्ने प्रति जागृहित्वमिष्टापूर्ते सꣳसृजेथा मयञ्च ॥ अस्मि
न्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्चसीदत ॥ ६ ॥ येन वहसि सहस्र
य्येनाग्ने सर्ववेदसम् ॥ तेनेमँय्यज्ञन्नो नयस्स्वर्देवेषु गन्तवे ॥ ७ ॥ अयन्तेयो
निर्ऋत्वियो यतो जातोअरोचथाः ॥ तञ्जानन्नग्न आरोहाथानोवर्धयारयिम् ॥८॥९

तपश्च तपस्यश्च शैशिरा ऋतू अग्नेरन्तः श्लेषोऽसि ॥ कल्पेतान्द्यावा पृथिवी
कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ॥ ये अग्नय
स्समनसोऽन्तरा द्यावापृथिवी इमे ॥ शैशिरा ऋतू अभिकल्पमाना इन्द्रमिवदेवा
अभिसँविशन्तुतया देवतयाङ्गिरस्वद् ध्रुवेसीदतम् ॥ परमेष्ठी त्वा सादयतु दिव
स्पृष्ठे ज्योतिष्मतीम् ॥ विश्वस्मै प्राणायापानाय व्यानाय विश्वञ्ज्योतिर्यच्छ ॥ सू

यस्तेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ १ ॥ लोकम्पृणच्छिद्रम्पृणाथो
सीद ध्रुवात्वम् ॥ इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योना असीषदन् ॥ २ ॥ ताअस्य
सूददोहसस्सोमꣳ श्रीणन्ति पृश्नयः ॥ जन्मन्देवानाँविशस्त्रिष्वारोचने दिवः ॥३॥
इन्द्रँविश्वा अवीवृधन्त्समुद्रव्यचं सङ्गिरः ॥ रथीतमꣳ रथीनाँवाजानाꣳ सत्प
तिम्पतिम् ॥ ४ ॥ प्रोथदश्वो नयवसेऽविष्यन्यदा महस्सँवरणाद्व्यस्थात् ॥ आद
स्य वातो अनुवातिशोचिरधस्मते व्रजनङ्कृष्णमस्ति ॥ ५ ॥ आयोष्ट्वा सदने
सादयाम्यवतश्छायायाꣳ समुद्रस्य हृदये ॥ रश्मीवतीम्भास्वती माया द्याम्भा
स्या पृथिवीमोर्वन्तरिक्षम् ॥ परमेष्ठी त्वा सादयतु दिवस्पृष्ठे व्यचस्वतीम्प्र
थस्वतीम् ॥ दिवँयच्छदिवन्दृꣳ हादिवम्माहिꣳसीः ॥ विश्वस्मै प्राणायापानाय
व्यानायो दानाय प्रतिष्ठायै चरित्राय ॥ सूर्यस्त्वाभिपातु मह्या स्वस्त्या च्छर्दिषा

शन्तमेनतया देवतयाङ्गिरस्वद्ध्रुवेसीदतम्॥६॥सहस्रस्य प्रमासि सहस्रस्य प्रति
मासि सहस्रस्योन्मासि॥ साहस्रोऽसि सहस्रायत्वा ॥ ७ ॥ ७ हरिः ॐ

अग्नेजातानष्ट ॥ ८ ॥ रश्मिनासत्यायसप्त ॥ ७ ॥ राज्ञ्यसिपञ्चदश ॥ १५ ॥
अयम्पुरोदश ॥ १० ॥ अग्निर्मूर्धात्रिꣳशत् ॥ ३० ॥ येन ऋषयोऽष्ट ॥ ८ ॥ तपश्च
सप्त ॥ ७ ॥ सप्तानुवाकेषुपञ्चाशीतिः ॥ ८५ ॥ युञ्जानोऽग्नेजातान्पञ्चाशीतिः
हरिः ॐ इति शुक्लयजुर्वेद काण्वसꣳहितापाठे षोळशोऽध्यायः

हरिः ॐ ॥ नमस्ते रुद्र मन्यवे उतोत इषवे नमः ॥ बाहुभ्यामुतते नमः॥१॥
या ते रुद्रशिवा तनूरघोरापापकाशिनी ॥ तया नस्तन्वाशन्तं मया गिरिशन्ता
भिचाकशीहि॥ २ ॥ या मिषुङ्गिरिशन्त हस्ते विभर्ष्यस्तवे ॥ शिवाङ्गिरित्रताङ्कुरु
माहिꣳसीः पुरुषञ्जगत् ॥३॥ शिवेन वचसा त्वा गिरिशाच्छा वदामसि ॥ यथा

नस्सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥४॥ अध्यवोचदधि वक्ता प्रथमो दैव्यो
भिषक् ॥ अहीꣳश्च सर्वाञ्जम्भ यन्त्सर्वाश्च यातुधान्योऽधराचीःपरासुव ॥ ५ ॥
असौ यस्ताम्रो अरुण उत बभ्रुस्सुमङ्गलः ॥ येचैनꣳ रुद्रा अभितो दिक्षु श्रि
तास्सहस्रशोऽवैषाꣳ हेळईमहे ॥ ६ ॥ असौयोऽवसर्पति नीलग्रीवो विलोहि
तः ॥ उतैनङ्गोपा अदृश्रन्नदृश्रन्नुदहार्यस्सदृष्टोमृळयातिनः ॥७॥ नमोऽस्तु
नीलग्रीवाय सहस्राक्षाय मीढुषे ॥ अथो ये अस्य सत्वानो हन्तेभ्योऽकर
न्नमः ॥ ८ ॥ प्रमुञ्च धन्व नस्त्वमुभयो रात्न्योर्ज्याम् ॥ याश्चते हस्त इषे
वः पराता भगवोवप ॥ ९ ॥ विज्यन्धनुः कपर्दिनो विशल्यो बाणवाँ२उत ॥
अनेशन्नस्यया इषव आभुरस्य निषङ्गधिः ॥ १० ॥ परि ते धन्वनो हेतिरस्मा
न्वृणक्तु विश्वतः ॥ अथो यइषुधिस्त वारे अस्मन्निधेहितम् ॥ ११ ॥ याते

हेतिर्मीढ्ळुष्टम हस्ते बभूव ते धनुः ॥ तयास्मान्विश्वत स्त्वमयक्ष्मया परि भुज ॥ १२ ॥ अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे ॥ निशीर्य शल्यानाम्मुखा शिवोनस्सुमना भव ॥ १३ ॥ नमस्त आयुधा यानाततायं धृष्णवे ॥ उभाभ्यामुत ते नमो बाहुभ्यान्तवधन्वने ॥ १४ ॥ मानो महान्तमुत मानो अर्भकम्मान उक्षन्त मुतमान उक्षितम् ॥ मानोवधीः पितरम्मोत मातरम्मा नः प्रियास्तन्वो रुद्ररीरिषः ॥ १५ ॥ मानस्तो केतनयेमान आयुषिमानोगोषु मानो अश्वेषुरीरिषः ॥ मानो वीरान्रुद्र भामिनो वधीर्हविष्मन्तस्सद मित्त्वा हवामहे ॥ १६ ॥ १ ॥

नमो हिरण्यबाहवे सेनान्यै दिशाञ्चपतये नमोनमो वृक्षेभ्यो हरिकेशेभ्यः पशूनाम्पतये नमः ॥ नमःशष्पिञ्जराय त्विषीमते पथीनाम्पतये नमोनमो

हरिकेशायोपवीतिने पुष्टानाम्पतये नमः ॥ १ ॥ नमोबभ्लुशायाव्याधिनेऽन्ना
नाम्पतये नमोनमो भवस्य हेत्यैजगताम्पतयेनमः ॥ नमोरुद्रायाततायिने क्षेत्राणा
म्पतये नमोनमस्सूतायाहन्त्यै वनानाम्पतये नमः ॥ २ ॥ नमोरोहिताय स्थप
तये वृक्षाणाम्पतये नमोनमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमः ॥ नमो
मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमोनम उच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये
नमः ॥ ३ ॥ नमः कृत्स्नायताय धावते सत्वनाम्पतये नमोनमस्सहमानाय नि
व्याधिने आव्याधिनीनाम्पतये नमः ॥ नमः ककुभाय निषङ्गिणे स्तेनानाम्पतये
नमोनमो निचेरवे परिचरायारण्यानाम्पतये नमः ॥ ४ ॥ नमोवञ्चते परिवञ्च
ते स्तायूनाम्पतये नमोनमो निषङ्गिणे इषुधिमते तस्कराणाम्पतये नमः ॥ नम
स्सृकायिभ्यो जिघांसद्भ्यो मुष्णताम्पतये नमोनमोऽसि मद्भ्योनक्तञ्चरद्भ्यो

विकृन्तानाम्पतये नमः ॥ ५ ॥ २

नम उष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमोनमइषुमद्भ्यो धन्वायिभ्य
श्च वोनमः ॥ नमआतन्वानेभ्यः प्रतिदधानेभ्यश्च वोनमोनम आयच्छद्भ्योऽ
स्यद्भ्यश्च वोनमः ॥ १ ॥ नमोविसृजद्भ्यो विध्यद्भ्यश्च वोनमोनमस्स्वपद्भ्यो
जाग्रद्भ्यश्च वोनमः ॥ नमः शयानेभ्य आसीनेभ्यश्च वोनमो नमस्तिष्ठद्भ्यो
धावद्भ्यश्चवोनमः ॥ २ ॥ नमस्सभाभ्यस्सभापतिभ्यश्च वोनमो नमोऽश्वेभ्योऽ
श्वपतिभ्यश्च वोनमः ॥ नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वोनमोनम उ
गणाभ्यस्तृꣳहतीभ्यश्च वोनमः ॥ ३ ॥ नमोगणेभ्यो गणपतिभ्यश्च वोनमो
नमोव्रातेभ्यो व्रातपतिभ्यश्च वोनमः ॥ नमोगृत्सेभ्यो गृत्सपतिभ्यश्च वोनमो
नमोविरूपेभ्यो विश्वरूपेभ्यश्चवोनमः ॥ ४ ॥ नमस्सेनाभ्यस्सेनानिभ्यश्च वोनमो

नमो रथिभ्यो अरथेभ्यश्च वोनमः ॥ नमःक्षतृभ्यस्सङ्ग्रही तृभ्यश्च वोनमोनमो महद्भ्यो अर्भकेभ्यश्च वोनमः ॥ ५ ॥ ३ ॥

नमस्तक्षभ्यो रथकारेभ्यश्च वोनमो नमःकुलालेभ्यः कर्मारेभ्यश्च वोनमः ॥ नमोनिषादेभ्यः पुञ्जिष्टेभ्यश्च वोनमो नमःश्वनिभ्यो मृगयुभ्यश्च वोनमः ॥ १ ॥ नमःश्वभ्यःश्वपतिभ्यश्च वोनमो नमोभवायच रुद्रायच ॥ नमश्शर्वायच पशुपतयेच नमोनीलग्रीवायच शितिकण्ठायच ॥ २ ॥ नमःकपर्दिनेच व्युप्तकेशाय च नमस्सहस्राक्षायच शतधन्वनेच ॥ नमोगिरिशायायच शिपिविष्टायच नमो मीढुष्टमाय चेषुमतेच ॥ ३ ॥ नमोह्रस्वायच वामनायच नमोबृहतेच वर्षीयसेच ॥ नमोवृद्धायच सवृधेच नमोऽग्र्यायच प्रथमायच ॥ ४ ॥ नमआशवेचाजिरायच नमश्शीघ्र्यायच शीभ्यायच ॥ नमऊर्म्यायचावस्वन्यायच न

मौनादे्यायच द्वीप्यायच ॥ ५ ॥ ४

नमोज्येष्ठायच कनिष्ठायच नमःपूर्वजायचापरजायच ॥ नमोमध्यमायचाप
गल्भायच नमोजघन्यायच बुध्न्यायच ॥१॥ नमस्सोभ्यायच प्रतिसर्यायच नमो
याम्यायच क्षेम्यायच ॥ नमः श्लोक्यायचावसान्यायच नमउर्वर्यायच खल्याय
च ॥ २ ॥ नमोवन्यायच कक्ष्यायच नमः श्रवायच प्रतिश्रवायच ॥ नमआशुषे
णायचाशुरथायच नमःशूरायचावभेदिनेच ॥ ३ ॥ नमोबिल्मिनेच कवचिनेच
नमोवर्मिणेच वरूथिनेच ॥ नमः श्रुतायच श्रुतसेनायच नमोदुन्दुभ्यायचाहन
न्यायच ॥ ४ ॥ नमोधृष्णवेच प्रमृशायच नमोनिषङ्गिणेचेषुधिमतेच ॥ नमस्ती
क्ष्णेषवेचायुधिनेच नमस्स्वायुधायच सुधन्वनेच ॥ ५ ॥ ५

नमस्स्रुत्यायचपथ्यायच नमःकाट्यायच नीप्यायच ॥ नमःकुल्यायच सर

स्यायच नमोनादेयायच वैशन्तायच ॥ १ ॥ नमःकूप्यायचावट्यायच नमई

ध्रयायचातप्यायच ॥ नमोमेघ्यायच विद्युत्यायच नमोवर्ष्यायचावर्ष्यायच ॥ २ ॥

नमोवात्यायच रेष्म्यायच नमोवास्तव्यायच वास्तुपायच ॥ नमस्सोमायच रुद्रा

यच नमस्ताम्रायचारुणायच ॥ ३ ॥ नमःशङ्गवेच पशुपतयेच नमउग्रायच भी

मायच ॥ नमोऽग्रेवधायच दूरेवधायच नमोहन्त्रेच हनीयसेच ॥ ४ ॥ नमो

वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ॥ नमःशम्भवेच मयोभवेच नमःशङ्करायच

मयस्करायच नमःशिवायच शिवतरायच ॥ ५ ॥ ६ ॥

नमःपार्यायचावार्यायच नमःप्रतरणायचोत्तरणायच ॥ नमस्तीर्थ्यायच कू

ल्यायच नमश्शष्प्यायच फेन्यायच ॥ १ ॥ नमस्सिकत्यायच प्रवाह्यायच न

मःकिंशिलायच क्षयणायच ॥ नमःकपर्दिनेच पुलस्तिनेच नमइरण्यायच

प्रपथ्यायच ॥ २ ॥ नमोवृज्यायच गोष्ठ्यायच नमस्तल्प्यायच गेह्यायच ॥ न
मोहृद्यायच निवेष्प्यायच नमःकाट्यायच गह्वरेष्ठायच ॥ ३ ॥ नमःशुष्क्याय
चहरित्यायच नमःपाꣳसव्यायच रजस्यायच ॥ नमोलोप्यायचोलप्यायच नम
ऊर्व्यायच सूर्व्यायच ॥ ४ ॥ नमःपर्णायच पर्णशदायच नमउद्गुरमाणायचा
भिघ्नतेच ॥ नमआखिदतेच प्रखिदतेच नमइषुकृद्भ्यो धनुष्कृद्भ्यश्च वोनमः ॥
नमोवःकिरिकेभ्यो देवानाꣳहृदयेभ्यो नमोविचिन्वत्केभ्यो नमोविक्षिणत्केभ्यो
नमआनिर्हतेभ्यः ॥ ५ ॥ ७

द्रापे अन्धसस्पते दरिद्र नीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्माभे
र्मारोङ्मो चनःकिञ्चनाममत् ॥ १ ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र
भरामहे मतीः ॥ यथाशमसद्द्विपदे चतुष्पदे विश्वम्पुष्टङ्ग्रामे अस्मिन्न नातु

रम् ॥ २ ॥ यातें रुद्रशिवा तनूश्शिवा विश्वाहा भेषजी ॥ शिव ऋतस्यंभेष
जी तयानो मृळजीवसें ॥ ३ ॥ परिणो हेती रुद्रस्य वृज्यात्परित्वेषस्य दुर्मति
र्महीगात् ॥ अवस्थिरा मघवंद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयायमृळ ॥ ४ ॥
मीढ्ढुष्टम शिवतम शिवो नस्सुमना भव ॥ परमे वृक्ष आयुधन्निधाय कृत्तिं
व्वसान आचरपिनाकम्बिभ्रदागहि ॥ ५ ॥ विकिरिद्रविलोहित नमस्ते अस्तु
भगवः ॥ यास्तें सहस्रꣳ हेतयो न्यमस्मन्निवं पन्तुताः ॥ ६ ॥ सहस्राणिस
हस्रशो बाह्वोस्तव हेतयः ॥ तासामीशानो भगवःपराचीना मुखाकृधि ॥ ७ ॥
असङ्ख्याता सहस्राणि येरुद्रा अधिभूम्याम् ॥ तेषाꣳ सहस्रयोजनेऽवधन्वानि
तन्मसि ॥ ८ ॥ अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि ॥ तेषाꣳ सहस्रयोज
नेऽवधन्वानि तन्मसि ॥ ९ ॥ नीलग्रीवाः शितिकण्ठा दिवꣳरुद्रा उपश्रिताः ॥

तेषाँ॒ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ १० ॥ नीलग्रीवाश्शितिकण्ठाश्शर्वा
अधःक्षमा चराः ॥ तेषाँ॒ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ११ ॥ येवृक्षेषु
शष्पिञ्जरा नीलग्रीवा विलोहिताः ॥ तेषाँ॒ सहस्रयोजनेऽव धन्वानि तन्मसि
॥ १२ ॥ येभूतानामधिपतयो विशिखासः कपर्दिनः ॥ तेषाँ॒सहस्रयोजनेऽव
धन्वानि तन्मसि ॥ १३ ॥ ये पथाम्पथिरक्षिण ऐळ बृदा आयुर्युधः ॥ तेषाँ
॒ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ १४ ॥ येतीर्थानि प्रचरन्ति सृकाहस्ता
निषङ्गिणः ॥ तेषाँ॒ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ १५ ॥ येऽन्नेषु विवि
ध्यन्ति पात्रेषु पिबतो जनान् ॥ तेषाँ॒ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ १६ ॥
यएतावन्तश्च भूयाँ॒सश्च दिशोरुद्रावि तस्थिरे ॥ तेषाँ॒ सहस्रयोजनेऽवधन्वा
नितन्मसि ॥ १७ ॥ नमोऽस्तु रुद्रेभ्यो येदिवि येषाँवर्षमिषवः ॥ तेभ्योदश

प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीची र्दशोर्ध्वाः ॥ तेभ्यो नमो अस्तु तेनो मृळयन्तु तेनोऽवन्तु ॥ तेयन्द्विष्मो यश्चनो द्वेष्टितमेषाञ्जम्भेदध्मः ॥ नमोऽस्तुरुद्रेभ्यो येऽन्तरिक्षे येषाँव्वात इषवः ॥ तेभ्योदश प्राचीर्दश दक्षिणा दश प्रतीची र्दशोदीची र्दशोर्ध्वाः ॥ तेभ्यो नमो अस्तु तेनोमृळयन्तु तेनोऽवन्तु ॥ तेयन्द्विष्मो यश्चनो द्वेष्टितमेषाञ्जम्भेदध्मः ॥ नमोऽस्तु रुद्रेभ्यो ये पृथिव्याँय्येषामन्नमिषवः ॥ तेभ्यो दशप्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमो अस्तु तेनोमृळयन्तु तेनोऽवन्तु ॥ तेयन्द्विष्मो यश्च नोद्वेष्टि तमेषाञ्जम्भे दध्मः ॥ १८ ॥ ८ ॥ हरिःॐ

नमस्तेषोळश ॥ १६ ॥ नमोहिरण्यबाहवे ॥ ५ ॥ नमउष्णीषिणे ॥ ५ ॥ नमस्तक्षभ्यः ॥ ५ ॥ नमोज्येष्ठाय ॥ ५ ॥ नमस्त्रुत्याय ॥ ५ ॥ नमःपार्यायेति

पञ्चपञ्च ॥ ५ ॥ द्रापेअन्धसइत्यष्टादश ॥ १८ ॥ अष्टानुवाकेषुचतुःषष्टिः ॥६४॥ वृक्षो भूतः पथस्तीर्थं ह्यन्नञ्चैतावतोऽपिच ॥ नमोऽस्तु रुद्रंपूर्ववा उक्त्वा वाच्याः क्रमाद्दिवि ॥ १ ॥ अन्तरिक्षे पृथिव्यांचाध्याये सप्तदशोतथा ॥ एवं यःपठते रुद्र गणोभूत्वा वसेच्चिरम् ॥ २ ॥ इतिशुक्लयजुर्वेदकाण्वसँहितापाठेसप्तदशोऽध्यायः

हरिःॐ अश्मन्नूर्जम्पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पतिभ्यो अधि सम्भृतम्पयः ॥ तान्न इषमूर्जन्धत्त मरुतस्सँरराणा अश्मँस्ते क्षुन्मयित ऊ र्ग्यन्द्विष्मस्तन्ते शुगृच्छतु ॥ १ ॥ इमामे अग्नइष्टका धेनवस्सन्त्वेकाच दशाच दशाच शतञ्च शतञ्च ॥ सहस्रञ्च सहस्रञ्चायुतञ्चायुतञ्च नियुतञ्च नियुत ञ्च ॥ २ ॥ अर्बुदञ्च न्यर्बुदञ्च समुद्रश्च मध्यञ्चान्तश्च परार्धश्च ॥ एता मे अग्नइष्टका धेनवस्सन्त्वमुत्रामुष्मिँल्लोके ॥ ३ ॥ ऋतवस्थ ऋतावृध ऋतु

छास्थं ऋतावृधः ॥ घृतश्च्युतो मधुश्च्युतो विराजोनाम कामदुघा अक्षीय
माणाः ॥ ४ ॥ समुद्रस्य त्वावकयाग्ने परिव्ययामसि ॥ पावको अस्मभ्यꣳ शि
वोभव ॥ ५ ॥ हिमस्यत्वा जरायुणाग्ने परिव्ययामसि ॥ पावको अस्मभ्यꣳशि
वोभव ॥ ६ ॥ उप ज्मन्नुप वेतसेऽवतरनदीष्वा ॥ अग्नेपित्तमपामसि मण्डूकिता
भिरागहि सेमन्नो यज्ञम्पावकवर्णꣳ शिवङ्कृधि ॥ ७ ॥ अपामिदन्ययनꣳ समुद्र
स्य निवेशनम् ॥ अन्याꣳस्ते अस्मत्तपन्तुहेतयः पावको अस्मभ्यꣳशिवोभव ॥८॥
अग्ने पावक रोचिषा मन्द्रयादेवजिह्वया ॥ आदेवान्वक्षि यक्षिच ॥ ९ ॥ सनः
पावकदीदिवोऽग्ने देवाँ२इहावह ॥ उप यज्ञꣳ हविश्चनः ॥ १० ॥ पावकयायाश्चित
यन्त्या कृपाक्षामन्रुरुच उषसोन भानुना ॥ तूर्वन्नया मन्नेतशस्यनूरण आयो घृ
णेन ततृषाणो अजरः ॥ ११ ॥ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ॥

अन्याँ२ऽस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यँ२ऽशिवोभव ॥ नृषदे वेळप्सुष
दे वेड्बर्हिषदे वेड्वनसदे वेट्स्वर्विदेवेट् ॥ १२ ॥ येदेवा देवानाँय्यज्ञिया य
ज्ञियानाँ२ऽसँव्वत्सरीणमुप भागमासते ॥ अहुतादोहविषो यज्ञे अस्मिन्त्स्वय
म्पिबन्तु मधुनो घृतस्य ॥ १३ ॥ येदेवा देवेष्वधि देवत्वमायन्ये ब्रह्मणः पु र
एतारो अस्य ॥ येभ्योनऋते पवतेधा मकिञ्चननते दिवोन पृथिव्या अधिस्नु
षु ॥ १४ ॥ प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः ॥ अन्याँ२ऽस्ते अ
स्मत्तपन्तु हेतयः पावको अस्मभ्यँ२ऽशिवोभव ॥ १५ ॥ १ ॥

अग्निस्तिग्मेन शोचिषा या सद्विश्वन्यत्रिणम् ॥ अग्निनो वनुते रयिम् ॥ १ ॥
यइमाविश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ॥ स आशिषा द्रविण
मिच्छमानः प्रथमच्छदवराँ२ आविवेश ॥ २ ॥ किँ२स्विदासीदधिष्ठानमारम्भणङ्क

तमास्वित्कथासीत् ॥ यतो भूमिञ्जनयन्विश्वकर्मा विद्यामौर्णोन्महिना विश्वच
क्षाः ॥ ३ ॥ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ॥ स
म्बाहुभ्यान्धमति सम्पतत्रै र्द्यावाभूमी जनयन्देव एकः ॥ ४ ॥ किँ स्विद्वनङ्क
उसवृक्ष आसयतो द्यावापृथिवी निष्टतक्षुः ॥ मनीषिणो मनसा पृच्छतेदुतद्यद
ध्यतिष्ठ द्भुवनानि धारयन् ॥ ५ ॥ याते धामानि परमाणि यावमायामध्यमा वि
श्वकर्मन्नुतेमा ॥ शिक्षा सखिभ्यो हविषिस्वधावस्व यँय्यजस्वतन्वँ्वृधानः ॥६॥
वाचस्पतिँविश्वकर्माणमूतये मनोजुवँवाजे अद्याहुवेम ॥ सनो विश्वानि हव
नानि जोषद्विश्वशम्भूरवसे साधुकर्मा ॥ ७ ॥ विश्वकर्मन्हविषा वा वृधानः
स्वयँय्यजस्व पृथिवीमुतद्याम् ॥ मुह्यन्त्वन्ये अभितस्सपत्ना इहास्माकम्मघवा
सूरिरस्तु ॥ ८ ॥ विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरयुध्यम् ॥

तस्मै विशस्समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥ ९ ॥ २ ॥

चक्षुषः पितामनसा हिधीरो घृतमेने अजनन्नम्नमाने ॥ यदेदन्ता अदद्द
हन्त पूर्व आदिद्यावा पृथिवी अप्रथेताम् ॥ १ ॥ विश्वकर्मा विमना आद्विहा
या धाता विधाता परमोत सन्दृक् ॥ तेषामिष्टानि समिषामदन्ति यत्रा सप्त
ऋषीन्परएकमाहुः ॥ २ ॥ योनः पिताजनितायो विधाता धामानि वेद भुव
नानि विश्वा ॥ यो देवानान्नामधाएक एवतꣳ सम्प्रश्नम्भुवनायन्त्यन्या ॥ ३ ॥
तआयजन्त द्रविणꣳ समस्माऋषयः पूर्वे जरितारोनभूना ॥ असूर्ते सूर्ते रज
सि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ ४ ॥ परो दिवा परएना पृथिव्या
परो देवेभिरसुरैर्यदस्ति ॥ कꣳस्विद्गर्भम्प्रथमन्दध्र आपो यत्र देवास्समपश्य
न्तपूर्वे ॥ ५ ॥ तमिद्गर्भम्प्रथमन्दध्रआपो यत्र देवास्समगच्छन्त विश्वे ॥

अजस्य नाभा अध्येकमर्पितँय्यस्मिन्विश्वानि भुवनानि तस्थुः ॥ ६ ॥ नतँविदाथय इमाजजानान्य द्युष्माकमन्तरम्बभूव ॥ नीहारेण प्रावृता जल्प्याचासुतृप उक्थशासँश्चरन्ति ॥ ७ ॥ विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः ॥ तृतीयः पिता जनितौषधीनामपाङ्गर्भँव्यदधात्पुरुत्रा ॥ ८ ॥ ३ ॥

आशुःशिशानो वृषभोन भीमो घनाघनःक्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोऽनि मिषएकवीरश्शतँसेना अजयत्साकमिन्द्रः ॥ १ ॥ सङ्क्रन्दनेनानि मिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ॥ तदिन्द्रेण जयत तत्सहध्वँय्युधो नरइषु हस्तेन वृष्णा ॥ २ ॥ सइषु हस्तैस्सनिषङ्गिभिर्वशीसँस्रष्टा सयुधइन्द्रो गणेन ॥ सँसृष्टजित्सोमपा बाहु शर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पते परिदीया रथेन रक्षोहा मित्राँ२अपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणो

युधाजयन्नस्माकमेध्यविता रथानाम् ॥ ४ ॥ बलविज्ञायस्थविरः प्रवीरस्सहस्वान्वाजी
सहमान उग्रः ॥ अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥
५ ॥ गोत्रभिदङ्गोविदँ्वज्रबाहुञ्जयन्तमज्मप्रमृणन्तमोजसा ॥ इमꣳसजाता
अनुवीरयध्वमिन्द्रꣳ सखायो अनुसꣳरभध्वम् ॥ ६ ॥ अभि गोत्राणि सहसागा
हमानोऽदयो वीरश्शतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाळ युध्योऽस्माकꣳ सेना
अवतु प्रयुत्सु ॥ ७ ॥ इन्द्रआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरएतु सोमः ॥
देवसेनानामभि भञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् ॥ ८ ॥ इन्द्रस्यवृष्णो
वरुणस्य राज्ञ आदित्यानाम्मरुताꣳ शर्धउग्रम् ॥ महामनसाम्भुवनच्यवानाङ्घो
षो देवानाञ्जयतामुदस्थात् ॥ ९ ॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनाम्मा म
कानाम्मनाꣳसि ॥ उद्वृत्रहन्वाजिनाँवाजिनान्युद्रथानाञ्जयताँय्यन्तु घोषाः ॥

१० ॥ अस्माकमिन्द्रस्समृतेषु ध्वजेष्वस्माकँय्या इषवस्ता जयन्तु ॥ अस्मा
कँव्वीरा उत्तरे भवन्त्वस्माँ२उदेवा अवता हवेषु ॥ ११ ॥ अमीषाञ्चित्तम्प्रति
लोभयन्ती गृहाणाङ्गान्यप्वेपरेहि ॥ अभिप्रेहि निर्दहहृत्सुशोकैरन्धेना मित्रास्त
मसा सचन्ताम् ॥ १२ ॥ अवसृष्टा परापत शरव्ये ब्रह्म सꣳशिते ॥ गच्छा
मित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः ॥ १३ ॥ प्रेता जयता नर इन्द्रोवश्शर्म
यच्छतु ॥ उग्रावस्सन्तु बाहवोऽनाधृष्या यथासथ ॥ १४ ॥ असौ यासेना
मरुतः परेषामभ्यैति नओजसा स्पर्धमाना ॥ ताङ्गूहततमसा पव्रते नयथा
मी अन्यो अन्यन्नजानन् ॥ १५ ॥ यत्र बाणा स्सम्पतन्ति कुमारा विशिखाइ
व ॥ तन्नइन्द्रो बृहस्पतिरदितिश्शर्म यच्छतु विश्वाहा शर्मयच्छतु ॥ १६ ॥
मर्माणिते वर्मणाच्छादयामि सोमस्त्वा राजा मृतेनानुवस्ताम् ॥ उरोर्वरीयोव

रुणस्तेकृणोतु जयन्तन्त्वानु देवामदन्तु ॥ १७ ॥ ४

उदेनमुत्तरान्नयाग्ने घृतेनाहुत ॥ रायस्पोषेण सꣳसृज प्रजयाच बहुङ्कृ
धि ॥ १ ॥ इन्द्रेमम्प्रतरान्नयसजातानामसद्वशी ॥ समेनꣳवर्चसा सृजदेवा
नाम्भागदाअसत् ॥ २ ॥ यस्य कुर्मो गृहे हविस्तमग्ने वर्धयात्वम् ॥ तस्मै दे
वा अधिब्रवन्नयञ्च ब्रह्मणस्पतिः ॥ ३ ॥ उदुत्वा विश्वे देवा अग्नेभरन्तु चि
त्तिभिः ॥ सनोभव शिवस्त्वꣳ सुप्रतीको विभावसुः ॥ ४ ॥ पञ्चदिशो दैवी
र्यज्ञमवन्तु देवीरपामतिन्दुर्मतिम्बाधमानाः ॥ रायस्पोषे यज्ञपतिमाभजन्ती
रायस्पोषे अधि यज्ञो अस्थात् ॥ ५ ॥ समिद्धे अग्ना अधिमामहान उक्थपत्र
ईड्योगृभीतः ॥ तप्तङ्घर्मम्परिगृह्या यजन्तोर्जा यद्यज्ञमयजन्त देवाः ॥ ६ ॥
दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमणाश्शतपयाः ॥ परिगृह्य देवा यज्ञमायन्देवा

देवेभ्यो अध्वर्यन्तो अस्थुः ॥ ७ ॥ वीतꣳ हविश्शमितꣳ शमिता यजध्यै तु
रीयो यज्ञो यत्र हव्यमेति ॥ ततोवाका आशिषोनो जुषन्ताम् ॥ ८ ॥ सूर्य
रश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ२अजस्रम् ॥ तस्य पूषा प्रसवेया
ति विद्वान्त्सम्पश्यन्विश्वा भुवनानि गोपाः ॥ ९ ॥ विमान एषादिवो मध्य
आस्त आपप्रिवान्रोदसी अन्तरिक्षम् ॥ सविश्वाचीरभिचष्टे घृताचीरन्तरा पू
र्वमपरञ्च केतुम् ॥ १० ॥ उक्षा समुद्रो अरुणस्सुपर्णः पूर्वस्ययोनिम्पितुरा वि
वेश ॥ मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ ॥ ११ ॥
इन्द्रँविश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः ॥ रथीतमꣳ रथीनाँवाजानाꣳ स
त्पतिम्पतिम् ॥ १२ ॥ देवहूर्यज्ञ आचवक्षत्सुम्नहूर्यज्ञ आचवक्षत् ॥ यक्षदग्नि
र्देवो देवाँ२आचवक्षत् ॥ १३ ॥ वाजस्य माप्रसव उद्ग्राभेणोदग्रभीत् ॥ अ

धा सपत्नानिन्द्रोमे निग्राभेणाधराँ२अकः ॥ १४ ॥ उद्ग्राभञ्च निग्राभञ्च ब्रह्मदेवा अवीवृधन् ॥ अधा सपत्नानिन्द्राग्नीमे विषूचीनान्व्यस्यताम् ॥ १५ ॥ ५ ॥

क्रमध्वमग्निनानाकमुख्यँ हस्तेषु बिभ्रतः ॥ दिवस्पृष्ठँ स्वर्गत्वा मिश्रादेवेभिराध्वम् ॥ १ ॥ प्राचीमनु प्रदिशम्प्रेहि विद्वानग्नेरग्ने पुरोअग्निर्भवेह ॥ विश्वा आशा दीद्यानो विभाह्यूर्जन्नो धेहि द्विपदे चतुष्पदे ॥ २ ॥ पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ॥ दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम् ॥ ३ ॥ स्वर्यन्तो नापेक्षन्त आद्याँ रोहन्ति रोदसी ॥ यज्ञँय्ये विश्वतोधारँ सुविद्वाँ सोवितेनिरे ॥ ४ ॥ अग्ने प्रेहि प्रथमो देव यताञ्चक्षुर्देवानामुतमर्त्यानाम् ॥ इयक्षमाणा भृगुभिस्सजोषास्स्वर्यन्तु यजमानास्स्वस्ति ॥ ५ ॥ नक्तोषासा समनसा विरूपे धापयेते शिशुमेकँ समीची ॥ द्यावाक्षामारुक्मो

अन्तर्विभाति देवा अग्निर्धारयन्द्रविणोदाः ॥ ६ ॥ अग्ने सहस्राक्ष शतमूर्धञ्छ
तन्ते प्राणास्सहस्रंव्यानाः ॥ त्वꣳसाहस्रस्य रायईशिषे तस्मैते विधेम वाजाय
स्वाहा ॥ ७ ॥ सुपर्णोऽसि गरुत्मान्पृष्ठे पृथिव्यास्सीद ॥ भासान्तरिक्षमापृ
णज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृꣳह ॥ ८ ॥ आजुह्वानस्सुप्रतीकः
पुरस्तादग्ने स्वँय्योनिमासीद साधुया ॥ अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे
देवा यजमानश्च सीदत ॥ ९ ॥ ताꣳसवितुर्वरेण्यस्यचित्रामाहँव्वृणेसुमतिंव्वि
श्वजन्याम् ॥ यामस्य कण्वो अदुहत्प्रपीनाꣳ सहस्रं धाराम्पयसा महीङ्गाम् ॥
१० ॥ विधेमते परमे जन्मन्नग्ने विधेमस्तोमैरवरे सधस्थे ॥ यस्माद्योनेरुदा
रिथा यजेतम्प्रत्वे हवीꣳषिजुहुरे समिद्धे ॥ ११ ॥ प्रेद्धो अग्ने दीदिहि पुरोनो
जस्रया सूर्म्याय विष्ठ ॥ त्वाꣳशश्वन्त उपयन्ति वाजाः ॥ १२ ॥ अग्नेत म

द्या श्वन्नस्तोमैः क्रतुन्न भद्रꣳ हृदिस्पृशम् ॥ ऋध्यामात ओहैः ॥ १३ ॥ चि
त्तिञ्जुहोमि मनसा घृतेन यथादेवा इहागमन्वीति होत्राऋता वृधः ॥ पत्येवि
श्वस्य भूमनो जुहोमि विश्वकर्मणे विश्वाहादाभ्यꣳहविः ॥ १४ ॥ सप्तते अग्ने
समिधस्सप्त जिह्वास्सप्त ऋषयस्सप्त धाम प्रियाणि ॥ सप्तहोत्रास्सप्तधात्वा य
जन्ति सप्तयोनीरापृणस्व घृतेनस्वाहा ॥ १५ ॥ ६

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च ॥ शुक्रश्चऋत
पाश्चात्यꣳहाः ॥ १ ॥ ईदृङ्चान्यादृङ्च सदृङ्चप्रतिसदृङ्च ॥ मितश्च सम्मि
तश्च सभराः ॥ २ ॥ ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च ॥ अन्तिमित्र
श्चदूरे अमित्रश्च गणः ॥ ३ ॥ ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च ॥ धर्ताच वि
धर्ताच विधारयः ॥ ४ ॥ ईदृक्षास एतादृक्षास ऊषुणस्सदृक्षासः प्रतिसदृक्षास

एतेन ॥ मितासश्च सम्मितासोनो अद्यसभरसो मरुतो यज्ञेअस्मिन् ॥ ५ ॥
स्वतवाँश्च प्रघासीचं सान्तपनश्च गृहमेधीचं ॥ क्रीळीचं शाकीचोज्जेषी ॥ ६ ॥
इन्द्रन्दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्यथेन्द्रन्दैवीर्विशो मरुतोऽनुवर्त्मानोऽभव
न् ॥ एवमिमँय्यजमानन्दैवीश्च विशोमानुषीश्चानुवर्त्मानोभूयासुः ॥ ७ ॥ ७ हरिः ॐ
अश्मन्नूर्जम्पञ्चदश ॥ १५ ॥ अग्निस्तिग्मेननव ॥ ९ ॥ चक्षुषःपिताष्ट ॥ ८ ॥
आशुःशिशानस्सप्तदश ॥ १७ ॥ उदेनम्पञ्चदश ॥ १५ ॥ क्रमध्वमग्निनाच ॥ १५ ॥
शुक्रज्योतिश्चसप्त ॥ ७ ॥ सप्तानुवाकेषु षडशीतिः ॥ ८६ ॥ इतिशुक्लयजुर्वेदका
ण्वसँहितापाठेऽष्टादशोऽध्यायः ॥ हरिः ॐ

हरिः ॐ ॥ इमँस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्ने सरिरस्य मध्ये ॥ उत्सञ्जु
षस्व शतधारमर्वन्त्समुद्रियँ सदनमाविशस्व ॥ १ ॥ घृतम्मिमिक्षे घृतमस्य

योनौर्घृते श्रितो घृतम्वस्य धाम ॥ अनुष्वधमावह मादयस्वस्वाहाकृतँव्वृषभ वक्षि हव्यम् ॥ २ ॥ समुद्रा दूर्म्मिर्मधु माँ२उदारदुपाꣳशुना सममृतत्वमानट् ॥ घृतस्य नाम गुह्यँय्यदस्ति जिह्वा देवानाममृतस्यनाभिः ॥ ३ ॥ वयन्नामप्रब्रवामा घृतस्यास्मिन्यज्ञे धारयामानमोभिः ॥ उपब्रह्मा शृणवच्छस्यमानञ्चतुःशृङ्गोऽवमीद्गौरएतत् ॥ ४ ॥ चत्वारि शृङ्गा त्रयो अस्य पादाद्वे शीर्षे सप्तहस्तासोअस्य ॥ त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याँ२आविवेश ॥ ५ ॥ त्रिधा हितम्पणिभिर्गुह्यमानङ्गविदेवासो घृतमन्वविन्दन् ॥ इन्द्र एकꣳ सूर्य एकञ्जजान वेनादेकꣳ स्वधया निष्टतक्षुः ॥ ६ ॥ एताअर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणानावचक्षे ॥ घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्यआसाम् ॥ सम्यक्स्रवन्ति सरितो नधेना अन्तर्हृदा मनसा पूयमानाः ॥

एते अर्षन्त्यूर्मयो घृतस्य मृगा इवक्षिपणोरीषमाणाः ॥ ७ ॥ सिन्धोरिव प्राध्व
नेशूघनासो वातप्रमियःपतयन्ति यह्वाः ॥ घृतस्य धारा अरुषोनवाजी काष्ठा
भिन्दन्नूर्मिभिः पिन्वमानः ॥ ८ ॥ अभिप्रवन्त समने वयोषाःकल्याण्यस्स्म
यमानासो अग्निम्॥ घृतस्य धारास्समिधो नसन्तता जुषाणो हर्यतिजातवेदाः ॥
९ ॥ कन्याइव वहतुमे तवाउ अञ्ज्यञ्जाना अभिचाकशीमि ॥ यत्रसोमस्सू
यते यत्र यज्ञो घृतस्य धारा अभितत्पवन्ते ॥ १० ॥ अभ्यर्षत सुष्टुतिङ्गव्यमा
जिमस्मासु भद्राद्रविणानि धत्त ॥ इमँय्यज्ञन्नयत देवतानो घृतस्य धारामधु
मत्पवन्ते ॥ ११ ॥ धामन्ते विश्वम्भुवनमधि श्रितमन्तस्समुद्रे हृद्यन्तरायु
षि ॥ अपामनीके समिथेय आभृतस्तमश्या ममधुमन्तन्तऊर्मिम् ॥ १२ ॥ १
वाजश्चमे प्रसवश्चमे प्रयतिश्चमे प्रसितिश्चमे ॥ धीतिश्चमे क्रतुश्चमे स्वरश्च

मे श्लोकश्चमे ॥ श्रावश्चमे श्रुतिश्चमे ज्योतिश्चमे स्वश्चमे यज्ञेनकल्पन्ताम् ॥ १ ॥
प्राणश्चमेऽपानश्चमे व्यानश्चमेऽसुचमे ॥ चित्तञ्चम आधीतञ्चमे वाक्चमे मन
श्चमे ॥ चक्षुश्चमे श्रोत्रञ्चमे दक्षश्चमे बलञ्चमे यज्ञेनकल्पन्ताम् ॥ २ ॥ ओ
जश्चमे सहश्चम आत्माचमे तनूश्चमे ॥ शर्मचमे वर्मचमेऽङ्गानिचमेऽस्थीनिच
मे ॥ परूꣳषिचमे शरीराणिचम आयुश्चमे जराचमे यज्ञेनकल्पन्ताम् ॥ ३ ॥
ज्यैष्ठ्यञ्चम आधिपत्यञ्चमे मन्युश्चमे भामश्चमे ॥ अमश्चमेऽम्भश्चमे जेमाच
मे महिमाचमे वरिमाचमे प्रथिमाचमे वर्षिमाचमे द्राघिमाचमे ॥ वृद्धञ्चमे वृद्धि
श्चमे यज्ञेनकल्पन्ताम् ॥ ४ ॥ २

सत्यञ्चमे श्रद्धाचमे जगच्चमे धनञ्चमे ॥ विश्वञ्चमे महश्चमे क्रीळाचमेमोद
श्चमे ॥ जातञ्चमे जनिष्यमाणञ्चमे सूक्तञ्चमे सुकृतञ्चमे यज्ञेनकल्पन्ताम् ॥ १ ॥

वित्तञ्चमे वेद्यञ्चमे भूतञ्चमेभविष्यच्चमे ॥ सुगञ्चमे सुपथ्यञ्चमऋद्धञ्चम ऋद्धि
श्चमे ॥ क्लृप्तञ्चमे क्लृप्तिश्चमे मतिश्चमेसुमतिश्चमेयज्ञेनकल्पन्ताम् ॥ २ ॥ य
न्ताचमे धर्ताचमे क्षेमश्चमे धृतिश्चमे ॥ विश्वञ्चमे महश्चमे सँविच्चमे ज्ञात्र
ञ्चमे ॥ सीरञ्चमे लयश्चमे सूश्चमे प्रसूश्चमे यज्ञेनकल्पन्ताम् ॥ ३ ॥ शञ्च
मे मयश्चमे प्रियञ्चमेऽनुकामश्चमे ॥ कामश्चमे सौमनसश्चमे भगश्चमे द्रविणं
श्चमे ॥ भद्रञ्चमे श्रेयश्चमे वसीयश्चमे यशश्चमे यज्ञेनकल्पन्ताम् ॥ ४ ॥ ३

ऊर्क्चमे सूनृताचमे पयश्चमे रसश्चमे ॥ घृतञ्चमे मधुचमे सग्धिश्चमे सपी
तिश्चमे ॥ कृषिश्चमे वृष्टिश्चमे जैत्रञ्चम औद्भिद्यञ्चमे यज्ञेनकल्पन्ताम् ॥ १ ॥
ऋतञ्चमेऽमृतञ्चमेऽयक्ष्मञ्चमेऽनामयच्चमे ॥ जीवातुश्चमे दीर्घायुत्वञ्चमेऽनमित्र
ञ्चमेऽभयञ्चमे ॥ सुगञ्चमे शयनञ्चमे सूषाश्चमे सुदिनञ्चमे यज्ञेनकल्पन्ता

म् ॥२ ॥ रयिश्चमे रायश्चमे पुष्टञ्चमे पुष्टिश्चमे ॥ विभुचमेप्रभुचमे पूर्णञ्चमे पूर्ण
तरञ्चमे ॥ कुयवश्चमेऽक्षितञ्चमेऽन्नञ्चमेऽक्षुच्चमे यज्ञेनकल्पन्ताम् ॥ ३ ॥ व्रीहय
श्चमे यवाश्चमे माषाश्चमे तिलाश्चमे ॥ मुद्गाश्चमे खल्वाश्चमे प्रियङ्गवश्चमेऽणवश्चमे॥
श्यामाकाश्चमेनीवाराश्चमे गोधूमाश्चमे मसूराश्चमे यज्ञेनकल्पन्ताम् ॥ ४ ॥ ४
अश्माचमे मृत्तिकाचमे गिरयश्चमे पर्वताश्चमे ॥ सिकताश्चमे वनस्पतय
श्चमे हिरण्यञ्चमेऽयश्चमे ॥ सीसञ्चमे त्रपुचमे श्यामञ्चमे लोहञ्चमे यज्ञेन
कल्पन्ताम् ॥ १ ॥ अग्निश्चम आपश्चमे वीरुधश्चम ओषधयश्चमे ॥ कृष्टपच्या
श्चमेऽकृष्टपच्याश्चमे ग्राम्याश्चमे पशवआरण्याश्चमे ॥ वित्तञ्चमे वित्तिश्चमे भू
तश्चमे भूतिश्चमे यज्ञेनकल्पन्ताम् ॥ २ ॥ वसुचमे वसतिश्चमे कर्मचमे शक्ति
श्चमे ॥ अर्थश्चमे यामश्चम इत्याचमे गतिश्चमे यज्ञेनकल्पन्ताम् ॥ ३ ॥५

अग्निश्चम इन्द्रश्चमे सोमश्चम इन्द्रश्चमे ॥ सविताचम इन्द्रश्चमे सरस्वतीचम
इन्द्रश्चमे ॥ पूषाचम इन्द्रश्चमे बृहस्पतिश्चम इन्द्रश्चमे यज्ञेनकल्पन्ताम् ॥१॥
मित्रश्चम इन्द्रश्चमे वरुणश्चम इन्द्रश्चमे ॥ धाताचम इन्द्रश्चमे त्वष्टाचम इन्द्र
श्चमे ॥ मरुतश्चम इन्द्रश्चमे विश्वेचमे देवाइन्द्रश्चमे यज्ञेनकल्पन्ताम् ॥ २ ॥
पृथिवीचम इन्द्रश्चमेऽन्तरिक्षञ्चम इन्द्रश्चमे ॥ द्यौश्चम इन्द्रश्चमे समाश्चम इन्द्र
श्चमे ॥ नक्षत्राणिचम इन्द्रश्चमे दिशश्चम इन्द्रश्चमे यज्ञेनकल्पन्ताम् ॥ ३ ॥ ६

अ॰ शुश्चमे रश्मिश्चमेऽदाभ्यश्चमेऽधिपतिश्चमे॥उपा॰ शुश्चमेऽन्तर्यामश्चमऐन्द्रवा
यवश्चमे मैत्रावरुणश्चमे॥ आश्विनश्चमे प्रतिप्रस्थानश्चमे शुक्रश्चमे मन्थीचमे य
ज्ञेनकल्पन्ताम् ॥१॥ आग्रयणश्चमे वैश्वदेवश्चमे ध्रुवश्चमे वैश्वानरश्चमे ॥ ऐन्द्राग्न
श्चमे महावैश्वदेवश्चमे मरुत्वतीयाश्चमे निष्केवल्यश्चमे ॥ सावित्रश्चमे सार

ध्रुवतश्चमे पात्नीवतश्चमे हारियोजनश्चमे यज्ञेनकल्पन्ताम् ॥ २ ॥ स्रुचश्चमे चमसाश्चमे वायव्यानिचमे द्रोणकलशश्चमे ॥ ग्रावाणश्चमेऽधिषवणेचमे पूतभृच्चम आधवनीयश्चमे ॥ वेदिश्चमे बर्हिश्चमे स्वगाकारश्चमेऽवभृथश्चमे यज्ञेनकल्पन्ताम् ॥ ३ ॥ अग्निश्चमे घर्मश्चमेऽर्कश्चमे सूर्यश्चमे ॥ प्राणश्चमेऽश्वमेधश्चमे पृथिवीचमेऽ दितिश्चमे ॥ दितिश्चमे द्यौश्चमेऽङ्गुलयः शक्वरयो दिशश्चमे यज्ञेनकल्पन्ताम् ॥ ४ ॥ व्रतञ्चम ऋतवश्चमे सँवत्सरश्चमे तपश्चमे ॥ अहोरात्रे ऊर्वष्ठीवेबृहद्रथन्तरेचमे यज्ञेनकल्पन्ताम् ॥ ५ ॥ ७

एकाचमे तिस्रश्चमे तिस्रश्चमे पञ्चचमे पञ्चचमे सप्तचमे सप्तचमेनवचमे नवचम एकादशचमएकादश चमेत्रयोदशचमे त्रयोदशचमे ॥ पञ्चदशचमे पञ्चदशचमे सप्तदशचमे सप्तदशचमे नवदशचमेनवदशचम एकविँशतिश्चम एक

विꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे ॥ पञ्चविꣳशतिश्च मे पञ्चवि
ꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च
म एकत्रिꣳशच्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥ १ ॥ चत
स्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोळश च मे षोळश च मे विꣳशति
श्च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मेऽष्टाविꣳ
शतिश्च मे ॥ द्वात्रिꣳशच्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारि
ꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳश
च्च मे यज्ञेन कल्पन्ताम् ॥ २ ॥ त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे ॥
पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे ॥ तुर्यवाट् च मे तुर्यौही च मे
यज्ञेन कल्पन्ताम् ॥ ३ ॥ पष्ठवाट् च मे पष्ठौही च म उक्षा च मे वशा च मे ॥ ऋष

भश्वश्च मे वेहच्च मेऽनड्वाँश्च मे धेनुश्च मे यज्ञेनकल्पन्ताम् ॥ ४ ॥ ८

वाजाय स्वाहा प्रसवाय स्वाहा पिजाय स्वाहा क्रतवे स्वाहा ॥ वसवे स्वाहा हर्पतये स्वाहा ॥ अहेमुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्यपतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा ॥ १ ॥ इयन्ते राण्मित्राय यन्तासियमनः ॥ ऊर्ज्जेत्वा वृष्टचैत्वा प्रजानान्त्वाधिपत्याय ॥ २ ॥ आयुर्यज्ञेन कल्पताम्प्राणो यज्ञेन कल्पताञ्चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रँय्यज्ञेन कल्पताम् ॥ वाग्यज्ञेन कल्पताम्मनो यज्ञेन कल्पतामात्मा यज्ञेन कल्पताम्पृष्ठँय्यज्ञेन कल्पताम् ॥ ब्रह्मयज्ञेन कल्पताँय्यज्ञो यज्ञेनकल्पताञ्ज्योतिर्यज्ञेन कल्पताꣳ स्वर्यज्ञेन कल्पताम् ॥ ३ ॥ स्तोमश्च यजुश्च ऋक्च सामच बृहच्चरथन्तरञ्च ॥ स्वर्देवा अगन्मामृता अभूम प्रजापतेः प्रजा अभूम वेट्

स्वाहा ॥ ४ ॥ ९ ॥ हरिः ॐ

इमꣳस्तनन्द्वादश ॥ १२ ॥ वाजश्चतस्रः ॥ ४ ॥ सत्यम् ॥४॥ ऊर्क्चंच ॥ ४ ॥ अश्माचातिस्रः ॥ ३ ॥ द्वितीयोऽग्निश्च ॥ ३ ॥ अꣳशुःपश्च ॥ ५ ॥ एकाच तस्रः ॥ ४ ॥ वाजायेतिच ॥ ४ ॥ नवानुवाकेषु त्रयश्चत्वारिꣳशत् ॥ ४३ ॥ देवसवितारिमꣳस्तनन्त्रयश्चत्वारिꣳशत् ॥ ४३ ॥ इतिशुक्लयजुर्वेद काण्वसँहितापाठे एकोनविंशत्यध्यायः ॥ हरिः ॐ ॥

वाजःप्राणस्यु रोजश्च ज्यैष्ठ्यं सत्यं क्रमेणहि ॥ वित्तं यन्ता शमूर्क्चंच ऋतंरयिस्तुव्रीहयः ॥ १ ॥ अश्माचाग्निर्वसूचाग्निर्मित्रोवै पृथिवीतथा ॥ अꣳशुस्त्वाग्रयणोहि स्रुचश्चाग्नि स्ततःपरम् ॥ २ ॥ व्रतञ्चैका चतस्रश्च ऽयविस्तु पष्ठवाट्चमे ॥ वाजायेयन्त आयुर्हि स्तोमोऽध्याये नवाधिके ॥ ४ ॥ दशैवं पठ

मानास्युर्यथासंख्यान्नरोऽपिये ॥ ते वै धन्यास्तु देवानामर्चनेनात्रसंशयः ॥ ४ ॥

हरिः ॐ ॥ वाजस्यनु प्रसवे मातरम्महीमदितिन्नाम वचसा करामहे ॥ यस्यामि
दँ विश्वम्भुवनमाविवेश तस्यान्नो देवस्सविता धर्मसाविषक् ॥ १ ॥ विश्वे अ
द्यमरुतो विश्वऊती विश्वे भवन्त्वग्नयस्समिद्धाः ॥ विश्वेनो देवा अवसागमन्तु
विश्वमस्तु द्रविणँ वाजो अस्मे ॥ २ ॥ वाजो नस्सप्त प्रदिशश्चतस्रोवा पराव
तः ॥ वाजोनो विश्वैर्देवैर्धनसाता इहावतु ॥ ३ ॥ वाजोनो अद्य प्रसुवातिदा
नँ वाजो देवाँ२ऋतुभिः कल्पयाति ॥ वाजोहि मासर्व वीरञ्चकार सर्वा आशा
वाजपतिर्भवेयम् ॥ ४ ॥ वाजः पुरस्तादुतमध्यतो नोवाजोदेवान्हविषा वर्धयाति ॥
वाजोहिमा सर्ववीरञ्चकार विश्वा आशा वाजपतिर्जयेयम् ॥ ५ ॥ सम्मासृजा
मिपयसा पृथिव्यास्सम्मासृजाम्यद्भिरोषधीभिः ॥ सोहँ वाजँ सनेयमग्ने ॥ ६ ॥

पयः पृथिव्याम्पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः ॥ पयस्वतीः प्रदिशस्स
न्तु मह्यम् ॥ देवस्यत्वा सवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ स
रस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्साम्राज्येनाभिषिञ्चामि ॥ ७ ॥ १

ऋताषाळृतधामाग्निर्गन्धर्वः ॥ तस्यौषधयोऽप्सरसो मुदोनाम ॥ सनइद
म्ब्रह्मक्षत्रम्पातु तस्मै स्वाहा वाट्ताभ्यस्स्वाहा ॥ १ ॥ सꣳहितो विश्वसामा सू
र्यो गन्धर्वः ॥ तस्यमरीचयोऽप्सरस आयुवो नाम ॥ सन इदम्ब्रह्म क्षत्रम्पा
तु तस्मै स्वाहा वाट्ताभ्यस्स्वाहा ॥ २ ॥ सुषुम्णस्सूर्यरश्मिश्चन्द्रमा गन्धर्वः ॥
तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ॥ सन इदम्ब्रह्म क्षत्रम्पातु तस्मै स्वा
हावाट्ताभ्यस्स्वाहा ॥ ३ ॥ इषिरो विश्वव्यचा वातो गन्धर्वः ॥ तस्यापो अप्स
रस ऊर्जो नाम ॥ सन इदम्ब्रह्म क्षत्रम्पातु तस्मै स्वाहा वाट्ताभ्यस्स्वाहा ॥ ४ ॥

भुज्युस्सुपर्णो यज्ञो गन्धर्वः ॥ तस्य दक्षिणा अप्सरसस्तावानाम ॥ सनइ
दम्ब्रह्म क्षत्रम्पातु तस्मै स्वाहा वाट्ताभ्यस्स्वाहा ॥ ५ ॥ प्रजापतिर्विश्वकर्मा
मनो गन्धर्वः ॥ तस्य ऋक्सामान्यप्सरस एष्टयो नाम ॥ सन इदम्ब्रह्म क्ष
त्रम्पातु तस्मै स्वाहा वाट्ताभ्यस्स्वाहा ॥ ६ ॥ सनो भुवनस्यपते प्रजापते य
स्यत उपरि गृहायस्य वेह ॥ अस्मै ब्रह्मणेऽस्मै क्षत्राय माहिशर्मयच्छ स्वाहा ॥७॥
समुद्रोऽसि नभस्वानार्द्रदानुश्शम्भूर्मयोभूरभिमा वाहि स्वाहा ॥ मारुतोऽसि
मरुताङ्गणश्शम्भूर्मयोभूरभिमावाहि स्वाहा ॥ अवस्यूरसिदुवस्वाञ्छम्भूर्मयोभू
रभिमावाहि स्वाहा ॥ ८ ॥ यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ॥
ताभिर्नो अद्यसर्वाभी रुचेजनाय नस्कृधि ॥ ९ ॥ यावो देवास्सूर्ये रुचोगोष्व
श्वेषु यारुचः ॥ इन्द्राग्नी ताभिस्सर्वाभी रुचन्नो धत्त बृहस्पते ॥ १० ॥ रुचन्नो

धेहि ब्राह्मणेषु रुचꣳ राजसुनस्कृधि ॥ रुचँव्विश्येषु शूद्रेषु मयि धेहि रुचारु
चेम् ॥ ११ ॥ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥
अहेळमानो वरुणेह बोध्युरुशꣳ समान आयुःप्रमोषीः ॥ १२ ॥ स्वर्ण घर्मस्वाहा
स्वर्णार्कस्वाहा स्वर्णशुक्रस्वाहा ॥ स्वर्णज्योतिस्स्वाहा स्वर्णसूर्यस्स्वाहा ॥१३॥ २
अग्निंय्युनज्मि शवसा घृतेन दिव्यꣳसुपर्णँव्वयसा बृहन्तम् ॥ तेनगमेम ब्रध्न
स्यं विष्टपꣳस्वोरुहाणा अधिनाकमुत्तमम् ॥ १ ॥ इमौतेपक्षाअजरौ पतत्रिणो
याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्ने ॥ ताभ्याम्पतेम सुकृतामुलोकँय्यत्र ऋषयो जग्मुः
प्रथमजाः पुराणाः ॥ २ ॥ इन्दुर्दक्षःश्येन ऋतावा हिरण्यपक्षःशकुनो भुरण्युः ॥
महान्त्सधस्थे ध्रुवआनिषत्तो नमस्ते अस्तु मामा हिꣳसीः ॥ ३ ॥ दिवो मूर्धासि
पृथिव्यानाभि रूर्गपामोषधीनाम् ॥ विश्वायुश्शर्म सप्रथा नमस्पथे ॥ ४ ॥ विश्व

स्य मूर्धन्नधितिष्ठ सिश्रितस्समुद्रे ते हृदयमप्स्वायुरपो दत्तो दधिम्भिन्त ॥ दिव
स्पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्याव ॥ ५ ॥ इष्टोयज्ञो भृगुभिराशीर्दा
वसुभिः ॥ तस्य न इष्टस्य प्रीतस्य द्रविणेहागमेः ॥ ६ ॥ इष्टो अग्निराहुतः पि
पर्तुन इष्टꣳहविः ॥ स्वगेदन्देवेभ्यो नमः ॥ ७ ॥ ३

यदाकूतात्समसुस्रो हृदो वामनसो वासम्भृतञ्चक्षुषोवा ॥ तदनुप्रेत सुकृता
मुलोकँय्यत्र ऋषयो जग्मुःप्रथमजाः पुराणाः ॥ १ ॥ एतꣳ संधस्थ परिते ददा
मि यमावहाच्छेवधिञ्जातवेदाः ॥ अन्वागन्ता यज्ञपतिर्वो अत्रतꣳ स्मजानीत
परमे व्योमन् ॥ २ ॥ एतञ्जानाथ परमे व्योमन्देवास्सधस्था विदरूपमस्य ॥
यदा गच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणवथा विरस्मै ॥ ३ ॥ उद्बुध्यस्वाग्ने प्र
तिजागृहि त्वमिष्टा पूर्ते सꣳसृजेथा मयञ्च ॥ अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे

द्वा यजमानश्च सादत ॥ ४ ॥ यनवहासि सहस्रय्यनाग्नि सर्वे वेदसम् ॥ तेनेमँ
य्यज्ञन्नो नयस्वर्द्देवेषु गन्तवे ॥ ५ ॥ प्रस्तरेण परिधिना स्त्रुचा वेद्याच बर्हिषा
ऋचेमँय्यज्ञन्नो नयस्वर्द्देवेषुगन्तवे ॥ ६ ॥ यद्दत्तँय्यत्पराद्दानँय्यत्पूर्तँय्याश्चदक्षिणाः॥
तदग्निर्वैश्वकर्मणस्स्वर्द्देवेषु नोदधत् ॥ ७ ॥ यत्रधारा अनपेता मधोर्घृतस्य च
याः ॥ तदग्निर्वैश्वकर्मण स्स्वर्द्देवेषु नोदधत् ॥ ८ ॥ ये अग्नयः पाञ्चजन्या अ
स्याम्पृथिव्यामधि ॥ तेषामसित्वमुत्तमः प्रनो जीवातवेसुव ॥ ९ ॥ ४

वार्त्रहत्याय शवसे पृतनाषाह्यायच ॥ इन्द्रत्वावर्तयामसि ॥ १ ॥ सहदा
नुम्पुरुहूत क्षियन्तमहस्तमिन्द्र सम्पिणक्कुणारुम् ॥ अभि वृत्रँवर्धमानम्पियो
रुमपाद मिन्द्र तवसाजघन्थ ॥ २ ॥ विन इन्द्र मृधो जहिनीचायच्छ पृतन्य
तः ॥ यो अस्माँ२अभिदा सत्यधरङ्गमया तमः ॥ ३ ॥ मृगोन भीमः कुच

रो गिरिष्ठाः परावत आजगन्था परस्याः ॥ स्तृकꣳ सꣳशायं पविमिन्द्रतिग्मँव्वि
शत्रून्ताह्ळिविमृधो नुदस्व॥ ४ ॥ वैश्वानरोनं ऊतय आप्रयातु परावतः ॥ अ
ग्निर्नस्सुष्टुतीरुप ॥ ५ ॥ पृष्टो दिवि पृष्टो अग्निः पृथिव्याम्पृष्टो विश्वा ओषधी
राविवेश ॥ वैश्वानरस्सहसा पृष्टो अग्निस्सनोदिवा सरिषस्पातु नक्तम् ॥ ६ ॥
अश्यामतङ्कामममे तवोती अश्याम रयिꣳ रयिवस्सुवीरम् ॥ अश्याम वाजम
भिवाजयन्तोऽश्याम द्युम्नमजराजरन्ते ॥ ७ ॥ वयन्ते अद्यररिमाहि काममुत्ता
नहस्ता नमसोपसद्य ॥ यजिष्ठेन मनसा यक्षिदेवानस्त्रेधतामन्मना विप्रो
अग्ने ॥ ८ ॥ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ॥ सचेतसो विश्वेदे
वा यज्ञम्प्रावन्तुनःशुभे ॥ ९ ॥ त्वँय्यविष्ठ दाशुषोनृꣳःपाहि शृणुधी गिरः ॥
रक्षा तोकमुतत्मना ॥ १० ॥ ५ ॥ हरिःॐ

वाजस्यनुसप्त ॥ ७ ॥ ऋताषाद्त्रयोदश ॥ १३ ॥अग्निंय्युनज्मिसप्त ॥ ७ ॥ यदाकूतान्नव ॥ ९ ॥ वार्त्रहत्यायदश ॥ १० ॥ पञ्चानुवाकेषुषट्चत्वारिꣳशत् ॥ ४६ ॥ प्राणा वाजा होता यज्जा षट्चत्वारिꣳशत् ॥

ऋताषाड्वै चौषधयः संहितश्च मरीचयः ॥ सुषुम्णस्सूर्य रश्मिश्च नक्षत्राणीषिरोह्यपः ॥ १ ॥ भुज्युस्सुपर्णो यज्ञश्च दक्षिणाचाप्सरसस्तथा ॥ प्रजापतिश्च ऋक्सामानिसनो ज्ञेयुः क्रमादिति ॥ २ ॥



हरिः ॐ स्वाद्वीन्त्वा स्वादुना तीव्रान्तीव्रेणामृताममृतेन ॥ मधुमतीम्मधुम
ता सृजामि सꣳ सोमेन ॥ सोमोऽस्यश्विभ्याम्पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय
सुत्राम्णे पच्यस्व ॥ १ ॥ परीतोषिञ्चता सुतꣳ सोमो य उत्तमꣳ हविः ॥ द
धन्वायो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥ २ ॥ वायोः पूतः पवित्रेण
प्राङ्क्सोमोअतिद्रुतः ॥ इन्द्रस्य युज्यस्सखा ॥ वायोः पूतः पवित्रेण प्रत्य
ङ्क्सोमो अतिद्रुतः ॥ इन्द्रस्य युज्यस्सखा ॥ ३ ॥ पुनातिते परिस्रुतꣳ सोमꣳ सू
र्यस्य दुहिता ॥ वारेण शश्वता तना ॥ ४ ॥ ब्रह्म क्षत्रम्पवते तेज इन्द्रियꣳ
सुरया सोमस्सुत आसुतो मदाय ॥ शुक्रेण देव देवताः पिपृग्धि रसेनान्नँय
जमानाय धेहि ॥ कुविदङ्गयवमन्तोयवञ्चिद्यथा दान्त्यनु पूर्वंवियूय ॥ इहे
हैषाङ्कृणुहि भोजनानि येबर्हिषो नम उक्तिन्न जग्मुः ॥ उपयामगृहीतोऽस्य

श्विभ्यान्त्वा सरस्वत्यै त्वेन्द्रायत्वा सुत्राम्णे ॥ एषते योनिस्तेजसेत्वा वीर्याय
त्वाबलायत्वा ॥ ५ ॥ नानाहि वान्देवहितꣳ सदस्कृतम्मासꣳ सृक्षाथाम्परमे व्यो
मन् ॥ सुरा त्वमसि शुष्मिणी सोमएष मामा हिꣳसीस्स्वाँय्योनिमाविशन्ती
॥ ६ ॥ उपयामगृहीतोऽस्याश्विनन्तेजस्सारस्वतँव्वीर्यमैन्द्रम्बलम् ॥ एषते योनि
र्मोदायत्वा नन्दायत्वा महसेत्वा ॥ ७ ॥ तेजोऽसि तेजो मयि धेहि वीर्यमसि
वीर्य्यम्मयि धेहि बलमसि बलम्मयिधेह्योजोऽस्योजो मयि धेहि ॥ मन्युरसिम
न्युम्मयि धेहि सहोऽसि सहो मयि धेहि ॥ ८ ॥ या व्याघ्रँव्विषूचिकोभौ वृक
श्च रक्षति ॥ श्येनम्पतत्रिणꣳ सिꣳहꣳ सेमम्पात्वꣳहसः ॥ ९ ॥ यदापिपेष
मातरम्पुत्रःप्रमुदितो धयन् ॥ एतत्तदग्ने अनृणो भवाम्यहतौ पितरौ मया ॥ १०॥
सम्पृचस्थसम्मा भद्रेण पृङ्क्त ॥ विपृचस्थाविमा पापेन पृङ्क्त ॥ ११ ॥ १

देवा यज्ञमतन्वत भेषजम्भिषजाश्विना ॥ वाचा सरस्वती भिषगिन्द्रायेन्द्रिया
णिदधतः ॥१॥ दीक्षायै रूपꣳ शष्पाणि प्रायणी यस्यतोक्मानि ॥ क्रयस्य रूपꣳ
सोमस्य लाजास्सोमाꣳ शवो मधु ॥ २ ॥ आतिथ्यरूपम्मासरम्महावीरस्य नग्न
हुः ॥ रूपमुपसदामेतत्तिस्रो रात्रीस्सुरासुता ॥ ३ ॥ सोमस्य रूपङ्क्रीतस्य परि
स्रुत्परिषिच्यते ॥ अश्विभ्यान्दुग्धम्भेषजमिन्द्रायैन्द्रꣳ सरस्वत्या ॥ ४ ॥ आसन्दी
रूपꣳ राजा सन्द्यैवेद्यै कुम्भीसुराधानी ॥ अन्तरउत्तरवेद्या रूपङ्कारोतरोभिष
क् ॥ ५ ॥ वेद्या वेदिस्समाप्यते बर्हिषा बर्हिरिन्द्रियम् ॥ यूपेन यूप आप्यते प्र
णीतो अग्निरग्निना ॥ ६ ॥ हविर्धानँय्यदश्विनाग्नीं ध्रँय्यत्सरस्वती ॥ इन्द्रायैन्द्रꣳ
सदस्कृतम्पत्नी शालङ्गार्हपत्यः ॥ ७ ॥ प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य ॥
प्रयाजेभिरनु याजान्वषट्कारेभिराहुतीः ॥ ८ ॥ पशुभिः पशूनाप्नोति पुरोळाशै

हवीꣳष्या ॥ छन्दोभिस्सामिधेनीर्याज्याभिर्वषट्कारान् ॥९॥ धानाः करम्भस्सक्त
वः परीवापः पयो दधि ॥ सोमस्य रूपꣳहविषं आमिक्षा वाजिनम्मधु ॥ १० ॥
धानानाꣳ रूपङ्कुवलम्परी वापस्य गोधूमाः ॥ सक्तूनाꣳ रूपम्बदरमुपवाकाः कर
म्भस्य ॥ ११ ॥ पयसो रूपँय्यद्यवा दध्नो रूपङ्कर्कन्धूनि ॥ सोमस्य रूपँवा
जिनꣳ सौम्यस्य रूपमामिक्षा ॥ १२ ॥ आश्रावयेतिस्तोत्रियाः प्रत्याश्रावो अनु
रूपः ॥ यजेतिधाय्या रूपम्प्रगाथाये यजामहाः ॥ १३ ॥ अर्धऋचैरुक्थानाꣳ रूप
म्पदैराप्नोति निविदः ॥ प्रणवैश्शस्त्राणाꣳ रूपम्पयसा सोम आप्यते ॥ १४ ॥
अश्विभ्याम्प्रातस्सवनमिन्द्रेणैन्द्रम्माध्यन्दिनम् ॥ वैश्वदेवꣳ सरस्वत्या तृतीयमा
प्तꣳ सवनम् ॥ १५ ॥ ॥ वायव्यैर्वायव्यान्याप्नोति सतेन द्रोणकलशम् ॥ कु
म्भीभ्यामम्भृणौसुते स्थालीभिस्थालीराप्नोति ॥ १६ ॥ यजुर्भिराप्यन्ते ग्रहाग्रहै

स्तोमाश्च विष्टुतीः ॥ छन्दोभिरुक्था शस्त्राणिसाम्नावभृथआप्यते ॥ १७ ॥ इळाभिर्भक्षानाप्नोति सूक्तवाकेनाशिषः ॥ शँय्युना पत्नी सँय्याजान्त्समिष्ट यजुषा सꣳस्थाम् ॥ १८ ॥ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोतिदक्षिणाम्॥ दक्षिणाश्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ १९ ॥ एतावद्रूपँय्यज्ञस्य यद्देवैर्ब्रह्मणाकृतम् ॥ तदेतत्सर्वमाप्नोति यज्ञेसौत्रामणीसुते ॥ २० ॥ २

सुरावन्तम्बर्हिषदꣳ सुवीरँय्यज्ञꣳ हिन्वन्ति महिषा नमोभिः ॥ दधानास्सोमन्दिवि देवतासु मदेमेन्द्रँय्यजमानास्स्वर्काः ॥ १ ॥ यस्ते रसस्सम्भृत ओषधीषु सोमस्य शुष्मस्सुरया सुतस्य ॥ तेन जिन्व यजमानम्मदेन सरस्वतीमश्विना इन्द्रमग्निम् ॥ २ ॥ यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय ॥ इमन्तꣳ शुक्रम्मधुमन्तमिन्दुꣳ सोमꣳ राजानमिह भक्षयामि ॥ ३ ॥ यदत्र

रिसꣳ रसिनस्सुतस्ययदिन्द्रो अपिबच्छचीभिः ॥ अहन्तदस्य मनसा शिवेन
सोमꣳ राजानमिह भक्षयामि ॥ ४॥ पितृभ्यस्स्वधायिभ्यस्स्वधानमः पितामहे
भ्यस्स्वधायिभ्यस्स्वधानमः ॥ प्रपितामहेभ्यस्स्वधायिभ्यस्स्वधानमः ॥ ५ ॥
अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः ॥ पितरः शुन्धध्वम् ॥ ६ ॥ पुन
न्तुमा पितरस्सोम्यासः पुनन्तुमा पितामहाः पुनन्तु प्रपितामहाः ॥ पवित्रेण श
तायुषा ॥ ७ ॥ पुनन्तुमा पितामहाः पुनन्तु प्रपितामहाः ॥ पवित्रेण शता
युषा विश्वमायुर्व्यश्नवै ॥ ८ ॥ अग्न आयूꣳषि पवस आसुवोर्जमिषञ्चनः ॥
आरेबाधस्व दुच्छुनाम् ॥ ९ ॥ पुनन्तुमा देवजनाः पुनन्तु मनसाधियः ॥ पुन
न्तुविश्वा भूतानि जातवेदः पुनीहिमा ॥ १० ॥ पवित्रेण पुनीहिमा शुक्रेणदे
वदीद्यत् ॥ अग्ने क्रत्वा क्रतूꣳरनु ॥ ११ ॥ यत्ते पवित्रमर्चिष्यग्नेविततमन्तरा ॥

ब्रह्मतेन पुनातुमा ॥ १२ ॥ पवमानस्सो अद्यनः पवित्रेण विचर्षणिः ॥ यः
पोता सपुनातुमा ॥ १३ ॥ उभाभ्यान्देव सवितः पवित्रेण सवेनच ॥ माम्पु
नीहि विश्वतः ॥ १४ ॥ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्वयस्तन्वो वी
तपृष्ठाः ॥ तया मदन्तस्सधमादेषु वयꣳस्याम पतयोरयीणाम् ॥ १५ ॥ येस
मानास्समनसः पितरो यमराज्ये ॥ तेषाँल्लोकस्स्वधानमो यज्ञो देवेषु कल्पताम् ॥
१६ ॥ ये समानास्समनसो जीवा जीवेषु मामकाः ॥ तेषाꣳ श्रीर्मयि कल्पता
मस्मिँल्लोके शतꣳ समाः ॥ १७ ॥ द्वेसृती अश्रृणवम्पितृणामहन्देवानामुतमर्त्या
नाम् ॥ ताभ्यामिदँविश्वमेजत्समेति यदन्तरा पितरम्मातरञ्च ॥ १८ ॥ इदꣳ
हविः प्रजननम्मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये ॥ आत्मसनि प्रजासनि प
शुसनि लोकसन्यं भयसनि ॥ अग्निःप्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो अ

स्मासुधत्त ॥ १९ ॥ ३

उदीरता मवर उत्परा स उन्मध्यमाः पितरस्सोम्यासः ॥ असुँय्य ईयुरं वृका
ऋतज्ञास्तेनोऽवन्तु पितरो हवेषु ॥ १ ॥ त्वꣳसोम प्रचिकितो मनीषात्वꣳरजिष्ठ
मनुनेषिपन्थाम् ॥ तवप्रणीती पितरो न इन्दोदेवेषु रत्नमभजन्तधीराः ॥ २ ॥
त्वया हिनः पितरस्सोम पूर्वे कर्माणि चक्रुःपवमान धीराः ॥ वन्वन्नवातः परिधी
ꣳरपोर्णु वीरेभिरश्वैर्मघवा भवानः ॥ ३ ॥ त्वꣳसोम पितृभिस्सँविदानोऽनुद्या
वापृथिवी आततन्थ ॥ तस्मै तइन्दो हविषा विधेम वयꣳस्याम पतयो रयीणा
म् ॥ ४ ॥ बर्हिषदःपितर ऊत्यर्वागिमा वोहव्या चकृमाजुषध्वम् ॥ त आगता व
सा शन्तमेनाथा नश्शँय्योररपो दधात ॥ ५ ॥ उपहूताः पितरस्सोम्यासो बर्हि
ष्येषु निधिषु प्रियेषु ॥ त आगमन्तुत इह श्रुवन्त्वधिब्रुवन्तुतेऽवन्त्वस्मान् ॥ ६ ॥

आहम्पितॄन्त्सु विदत्राँ२अवित्सिन पातञ्च विक्रमणञ्च विष्णोः ॥ बर्हिषदो
ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ ७ ॥ अग्निष्वात्ताःपितर
एहगच्छत सदस्सदस्सदत सुप्रणीतयः ॥ अत्ता हवीꣳषि प्रयतानि बर्हिष्य
था रयिꣳ सर्ववीरन्दधातन ॥ ८ ॥ आयन्तुनः पितरस्सोम्यासोऽग्निष्वात्ताः प
थिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ९ ॥
येअग्निष्वात्ता येअनग्निष्वात्ता मध्ये दिवस्स्वधया मादयन्ते ॥ तेभ्यस्स्वराळसुनी
तिमेनाँय्यथा वशन्तन्वङ्कल्पयाति ॥ १० ॥ अग्निष्वात्ता नृतुमतो हवामहे नारा
शꣳसेसोम पीथँय्यआशुः ॥ तेनो विप्रासस्सुहवा भवन्तु वयꣳस्याम पतयोर
यीणाम् ॥ ११ ॥ आच्या जानु दक्षिणतो निषद्येमँय्यज्ञमभिगृणीत विश्वे ॥
माहिꣳसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ १२ ॥ आसीना

सो अरुणीना मुपस्थे रयिन्धत्त दाशुषे मर्त्याय ॥ पुत्रेभ्यः पितरस्तस्य वस्वः
प्रयच्छतत इहोर्जन्दधात ॥ १३ ॥ यमग्ने कव्यवाह नत्वञ्चिन्मन्यसेरयिम् ॥
तन्नो गीर्भिः श्रवाय्यन्देवत्रा पनया युजम् ॥ १४ ॥ यो अग्निः कव्यवाहनः
पितॄन्यक्ष्द्दता वृधः ॥ प्रेदुहव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥ १५ ॥
त्वमग्न ईळितो जातवेदो वाड्ढव्यानि सुरभीणि कृत्वी ॥ प्रादाःपितृभ्यस्स्वध
या ते अक्षन्नद्धि त्वन्देव प्रयता हवीꣳषि ॥ १६ ॥ इदम्पितृभ्यो नमो अस्त्व
द्ययेपूर्वासो य उपरासईयुः ॥ ये पार्थिवे रजस्या निषत्ताये वा नूनꣳ सुवृज
ना सुविक्षु ॥ ॥ १७ ॥ ये चेह पितरो ये चनेह याꣳश्च विद्मयाँ२उ चनप्र वि
द्म ॥ त्वँवेत्थ यतिते जातवेदस्स्वधाभिर्यज्ञꣳ सुकृतञ्जुषस्व ॥ १८ ॥ अधा
यथानः पितरः परासः प्रत्नासो अग्नऋतमाशुषाणाः ॥ शुचीदयन्दीधिं तिमु

क्थ शासःक्षामाभिन्दन्तो अरुणीरप व्रन् ॥ १९ ॥ उशान्तस्त्वा निधीम ह्युश न्तस्समिधीमहि ॥ उशन्नु शत आवह पितॄन्हविषे अत्तवे ॥ २० ॥ अपाम्फे नेन नमुचेश्शिर इन्द्रोदवर्तयः ॥ विश्वायदजयस्पृधः ॥ २१ ॥ ४

सोमो राजामृतꣳ सुतऋ जीषेणाजहान्मृत्युम् ॥ ऋतेन सत्यमिन्द्रियँ विपा नꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ १ ॥ अद्भ्यः क्षीरँ व्यपिब त्क्रुङाङ्गिरसो धिया ॥ ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्ध स इन्द्र स्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ सोमं मद्भ्यो व्यपिब च्छन्दसा हꣳसः शुचिषत् ॥ ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रि यमिदम्पयोऽमृतम्मधु ॥ अन्नात्परि स्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयस्सो मम्प्रजापतिः ॥ ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिद

म्पयोऽमृतम्मधु ॥ २ ॥ रेतो मूत्रँव्विजहाति योनिम्प्रविशदिन्द्रियम् ॥ गर्भो
जरायुणा वृत उल्बञ्जहाति जन्मना ॥ ऋतेन सत्यमिन्द्रियँव्विपानꣳ शुक्रम
न्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ३ ॥ दृष्ट्वा रूपे व्याकरोत्सत्या नृ
ते प्रजापतिः ॥ अश्रद्धा मनृते दधाच्छ्रद्धाꣳ सत्ये प्रजापतिः ॥ ऋतेन सत्य
मिन्द्रियँव्विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ४ ॥ वेदे
न रूपे व्व्यपिबत्सुता सुतौ प्रजापतिः ॥ ऋतेन सत्यमिन्द्रियँव्विपानꣳ शुक्रमन्ध
स इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ दृष्ट्वा परिस्रुतो रसꣳ शुक्रेण शुक्रँव्व्य
पिबत्पयस्सोमम्प्रजापतिः ॥ ऋतेन सत्यमिन्द्रियँव्विपानꣳ शुक्रमन्धस इन्द्रस्ये
न्द्रियमिदम्पयोऽमृतम्मधु ॥ ५ ॥ ५

सीसेनतन्त्रम्मनसामनीषिणऊर्णासूत्रेणकवयोवयन्ति ॥ अश्विनायज्ञꣳसविता

सरस्वतीन्द्रस्यरूपँव्वरुणो भिषज्यन् ॥१॥ तदस्य रूपममृतँ शचीभिस्तिस्रोदधु र्देवतास्सँ रराणाः ॥ लोमानि शष्पैर्बहुधानतोक्मभिस्त्व गस्य माँ समभव न्नलाजाः ॥ २ ॥ तदश्विना भिषजारुद्रवर्तनी सरस्वती वयति पेशो अन्तरम् ॥ अस्थिमज्जा नम्मासैः कारोतरेण दधतो गवान्त्वचि ॥ ३ ॥ सरस्वती मनसा पेशलँव्वसुनासत्याभ्याँव्वयाति दर्शतँव्वपुः ॥ रसम्परिस्रुता नरोहितन्नग्नहुर्धीर स्तसरन्नवेम ॥ ४ ॥ पयसा शुक्रममृतञ्जनित्रँ सुरया मूत्राज्जनयन्त रेतः ॥ अपामतिन्दुर्मतिम्बाधमाना ऊवध्यँव्वातँ सव्वन्तदारात् ॥ ५ ॥ इन्द्रस्सुत्रा माहृदयेन सत्यम्पुरोळाशेन सविता जजान ॥ यकृत्क्लोमानँव्वरुणोभिषज्यन्म तस्ने वायव्यै र्नमिनाति पित्तम् ॥ ६ ॥ आन्त्राणि स्थालीर्मधु पिन्वमाना गु दाःपात्राणि सुदुघान धेनुः ॥ श्येनस्य पत्रन्नप्लीहा शचीभिरासन्दीनाभिरुदरन्न

माता ॥ ७ ॥ कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्याङ्गर्भो अन्तः ॥ प्ला
शिर्व्यक्तश्शतधार उत्सोदुहेन कुम्भी स्वधाम्पितृभ्यः ॥ ८ ॥ मुखꣳ सदस्यशिर
इत्सतेन जिह्वापवित्रमश्विना सन्त्सरस्वती ॥ चप्पन्न पायुर्भिषगस्य वालो व
स्तिर्न शेपो हरसा तरस्वी ॥ ९ ॥ अश्विभ्याञ्चक्षुरमृतङ्ग्रहाभ्याञ्छागेन तेजो
हविषा शृतेन ॥ पक्ष्माणि गोधूमैः कुवलैरुतानि पेशोन शुक्रमसि तँव्वसा
ते ॥ १० ॥ अविर्न मेषो नसिवीर्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम् ॥
सरस्वत्युपवाकैर्व्यानन्नस्यानि बर्हिर्बदरैर्जजान ॥ ११ ॥ इन्द्रस्य रूपमृषभो
बलाय कर्णाभ्याꣳ श्रोत्रममृतङ्ग्रहाभ्याम् ॥ यवान बर्हिर्भ्रुवि केसराणि कर्क
न्धुं जज्ञे मधु सारघम्मुखात् ॥ १२ ॥ आत्मन्नुपस्थे न वृकस्य लोम मुखे श्म
श्रूणि नव्याघ्रलोम ॥ केशान शीर्षं न्यशसे श्रियै शिखा सिꣳहस्य लोमत्वि

षिरिन्द्रियाणि ॥ १३ ॥ अङ्गान्यात्मन्भिषजा तदश्विनात्मानमङ्गैस्समधात्सर

स्वती ॥ इन्द्रस्यरूपꣳशतमानमायुश्चन्द्रेण ज्योतिरमृतन्दधानाः ॥ १४ ॥ सर

स्वती योन्याङ्गर्भमन्तरश्विभ्याम्पत्नी सुकृतम्बिभर्ति ॥ अपाꣳ रसेन वरुणो न

साम्नेन्द्रꣳ श्रियै जनयन्नप्सुराजा ॥ १५ ॥ तेजःपशूनाꣳ हविरिन्द्रियावत्परिस्रु

ता पयसा सारघम्मधु ॥ अश्विभ्यान्दुग्ध म्भिषजा सरस्वत्या सुता सुताभ्या

ममृतस्सोम इन्दुः ॥ १६ ॥ ६ ॥

क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि ॥ मात्वाहिꣳसीन्मामा हिꣳसीः ॥ निष

साद धृत व्रतो वरुणःपस्त्यास्वा ॥ साम्राज्याय सुक्रतुः ॥ मृत्योःपाहि विद्योत्पा

हि ॥ देवस्यत्वा सवितुःप्रसवेऽश्विनो र्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ १ ॥ अश्वि

नोर्भैषज्येन तेजसे ब्रह्मवर्चसा याभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्याया न्ना

द्यांया भिषिञ्चामि ॥ इन्द्रस्येन्द्रियेण बलायश्रियै यशसेऽभिषिञ्चामि ॥ २ ॥
कोंऽसि कतमोंऽसि कस्मै त्वा कायंत्वा ॥ सुश्लोक सुमङ्गल सत्यराजन् ॥ ३ ॥
शिरोंमे श्रीर्यशो मुखन्त्विषिः केशाश्चश्मश्रूणि ॥ राजा मे प्राणो अमृतꣳसम्रा
ट्चक्षुर्विराट्श्रोत्रम् ॥ ४ ॥ जिह्वा मे भद्रँ व्वाङ्महोमनो मन्युस्स्वराड्भामः ॥
मोदाः प्रमोदा अङ्गुली रङ्गानि मित्रम्मे सहः ॥ ५ ॥ बाहूमे बलमिन्द्रियꣳ ह
स्तौ मे कर्म वीर्यम् ॥ आत्मा क्षत्रमुरो मम ॥ ६ ॥ पृष्ठी मे राष्ट्रमुदरमꣳ सौ
ग्रीवाश्च श्रोणी ॥ ऊरू अरत्नी जानुनी विशोमेऽङ्गानिसर्वतः ॥ ७ ॥ नाभिर्मे
चित्तँव्विज्ञानम्पायुर्मेऽपचितिर्भसत् ॥ आनन्दनन्दा आण्डौमे भगस्सौभाग्यम्प
सः ॥ ८ ॥ जङ्घाभ्याम्पद्भ्यान्धर्मोऽस्मि विशिराजा प्रतिष्ठितः ॥ प्राति क्षत्रे
प्रतितिष्ठामि राष्ट्रेप्रत्यश्वेषु प्रतितिष्ठामि गोषु ॥ ९ ॥ प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन्प्र

तिं प्राणेषुप्रतिं तिष्ठामि पुष्टे ॥ प्रतिद्यावा पृथिव्योःप्रतिं तिष्ठामि यज्ञे ॥ १० ॥ त्रयादेवा एकादश त्रयस्त्रिꣳशास्सुराधसः ॥ बृहस्पतिं पुरोहिता देवस्य सवितुस्सवे ॥ देवादेवै रवन्तुमा ॥ ११ ॥ प्रथमा द्वितीयै र्द्वितीया स्तृतीयै स्तृतीयां स्सत्येन ॥ सत्यँय्यज्ञेन यज्ञो यजुर्भि र्यजूꣳषि सामभिः ॥१२॥ सामान्यृग्भिर्ऋचः पुरोऽनु वाक्याभिः पुरोऽनुवाक्या याज्याभिर्याज्या वषट्कारैः ॥ वषट्कारा आहुतिभि राहुतयो मे कामान्त्समर्धयन्तु भूस्स्वाहा ॥ १३ ॥ लोमानि प्रयतिर्मम त्वङ्म आनति रागतिः ॥ माꣳसम्म उपनतिर्व स्वस्थिमज्जाम आनतिः ॥ १४ ॥ ७

हरिः ॐ॥

स्वाद्वीन्त्वैकादश ॥ ११ ॥ देवायज्ञँविंशतिः ॥ २० ॥ सुरावन्तमेकोनविंशतिः ॥ १९ ॥ उदीरतामेकविंशतिः ॥ २१ ॥ सोमोराजापञ्च ॥ ५ ॥ सीसेनतन्त्रं

षोळश ॥ १६ ॥ क्षत्रस्यनाभिश्चतुदश ॥ १४ ॥ सप्तानुवाकेषु षड्डुत्तरशतम् ॥ १०६ ॥ सोमोराजा त्वद्ध्यस्सोम मन्द्रयोन्नाद्रेत एवच ॥ दृष्ट्वा श्रद्धाचवेदेनदृष्ट्वापरि स्रुतोरसम् ॥ १ ॥ इति शुक्लयजुर्वेद काण्व सँहिता पाठे एक विंशत्यध्यायः ॥ हरिःॐ

हरिःॐ॥ यद्देवा देव हेळनन्देवा सश्चकृमा वयम् ॥ अग्निर्मातस्मा देनसो विश्वान्मुञ्च त्वꣳहसः ॥ १ ॥ यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् ॥ वायुर्मा तस्मा देनसो विश्वान्मुञ्च त्वꣳहसः ॥ २ ॥ यदि जाग्रद्यदि स्वप्नएनाꣳसि चकृमा वयम् ॥ सूर्यो मातस्मा देनसो विश्वान्मुञ्च त्वꣳहसः ॥ ३ ॥ यद्ग्रामे यदरण्ये यत्सभायाँ य्यदिन्द्रिये ॥ यच्छूद्रे यदर्ये यदेनश्च कृमावयम् ॥ यदेकस्याधि धर्माणि तस्या वयजं नमासि ॥ यदापो अघ्न्या इति वरुणे तिश

पां महे ततो वरुणनो मुञ्च ॥ अवभृथ निचुम्पुण निचे रुरसि निचुम्पुण ॥
अवदेवैर्देव कृतमेनो यक्ष्य वमर्त्यैर्मर्त्यै कृतम्पुरु राव्णो देवरि षस्पाहि ॥ समु
द्रे ते हृदयमप्स्वन्तस्सन्त्वा विशन्त्वोषधी रुतापः ॥ सुमित्रियान आप ओष
धयस्सन्तु दुर्मित्रिया स्तस्मै सन्तु ॥ योऽस्मान्द्वेष्टियञ्च वयन्द्विष्मः ॥ ४ ॥
द्रुपदा दिवमुमुचान स्स्विन्नस्स्नातो मलादिव ॥ पूतम्पवित्रेणेवाज्य मापश्शु
न्धन्तु मैनसः ॥ ५ ॥ उद्व यन्तमं सस्परि स्वःपश्यन्त उत्तरम् ॥ देवन्देव
त्रासूर्य मगन्मज्योतिरुत्तमम् ॥ ६ ॥ अपो अद्यान्वचारिषꣳ रसेन समसृक्ष्म
हि ॥ पयस्वानग्न आगमन्त म्मासꣳ सृज वर्चसा प्रजयाचधनेनच ॥ एधोऽ
स्ये धिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि ॥ ७ ॥ समाववर्ति पृथि
वी समुषा स्समु सूर्यः ॥ समु विश्वमिदञ्जगत् ॥ वैश्वानर ज्योतिर्भूयासꣳ

ठिवमून्कामान्व्यंश्नवै भूस्स्वाहा ॥ ८ ॥ १ ॥

अभ्यादधामि समिधमग्ने व्रतपते त्वयि ॥ व्रतञ्च श्रद्धाञ्चोपै मीन्धेत्वा दी
क्षितो अहम् ॥१॥ यत्र ब्रह्म चक्षत्रञ्च सम्यञ्चौ चरतस्सह ॥ तँल्लोकम्पुण्यम्प्रज्ञे
षँय्यत्र देवास्सहाग्निना ॥ २ ॥ यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतस्सह ॥ तँल्लो
कम्पुण्यम्प्रज्ञेषँय्यत्र सेदिर्न विद्यते ॥ ३॥ अँशुनाते अँशुः पृच्यताम्परुषापरुः ॥
गन्धस्ते सोममवतु मदाय रसो अच्युतः ॥ ४ ॥ सिञ्चन्ति परिषिञ्चन्त्युत्सि
ञ्चन्ति पुनन्तिच ॥ सुरायै बभ्रवै मदे किन्त्वो वदति किन्त्वः ॥ ५ ॥ धाना
वन्तङ्करम्भिणमपूपवन्तमुक्थिनम् ॥ इन्द्र प्रातर्जुषस्वनः ॥ ६ ॥ बृहदिन्द्रा
य गायत मरुतो वृत्रहन्तमम् ॥ येन ज्योतिरजनयन्नृता वृधो देवन्देवाय जा
गृवि ॥ ७ ॥ अध्वर्यो अद्रिभिस्सुतँ सोमम्पवित्रआनय ॥ पुनीहीन्द्राय पा

तवे ॥ ८ ॥ २

योभूतानामधिपतिर्यस्मिँल्लोका अधिश्रिताः ॥ यईशे महतो महाᳬँस्तेन गृह्णा
मि त्वामहम्म यिगृह्णामि त्वामहम् ॥ १ ॥ उपयामगृहीतोऽस्याश्विभ्यान्त्वा
सरस्वत्यै त्वेन्द्रायत्वा सुत्राम्णे ॥ एषते योनिरश्विभ्यान्त्वा सरस्वत्यै त्वेन्द्रायत्वा
सुत्राम्णे ॥ २ ॥ प्राणपामे अपानपाश्चक्षुष्पाः श्रोत्रपाश्चमे ॥ वाचोमे विश्वभेषजोमने
सोऽसि विलायकः ॥३॥ आश्विनकृतस्यते सरस्वति कृतस्येन्द्रेण सुत्राम्णाकृतस्य ॥
उपहूत उपहूतस्य भक्षयामि ॥ ४ ॥ ३

समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः ॥ त्रिभिर्देवैस्त्रिᳬँशता
वज्रबाहुर्जघान वृत्रँव्विदुरो ववार ॥ १ ॥ नराशᳬँसःप्रति शूरो मिमानस्तनूनपा
त्प्रति यज्ञस्यधाम ॥ गोभिर्वपावान्मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचे

ता: ॥ २ ॥ ईळितो देवैर्हरिवाँ२अभिष्टिराजुह्वानोहविषाशर्द्धमानः ॥ पुरन्दरोगो
त्रभिद्वज्रबाहुरायातु यज्ञमुपनो जुषाणः ॥ ३ ॥ जुषाणो बर्हिर्हरिवान्न इन्द्रः
प्राचीनꣳ सीदत्प्रदिशा पृथिव्याः ॥ उरुप्रथाः प्रथमानꣳ स्योनमादित्यैरक्तँव्वसु
भिस्सजोषाः ॥ ४ ॥ इन्द्रन्दुरः कवष्यो धावमाना वृषाणँय्यन्तु जनयस्सुपत्नीः ॥
द्वारो देवीरभितो विश्रयन्ताꣳसुवीरा वीरम्प्रथमानामहोभिः ॥ ५ ॥ उषासान
क्ता बृहती बृहन्तम्पयस्वती सुदुघेशूरमिन्द्रम् ॥ तन्तुन्ततम्पेशसा सँव्वयन्ती दे
वानान्देवँय्यजतस्सुरुक्मे ॥ ६ ॥ दैव्या मिमानामनुषः पुरुत्रा होतारा इन्द्रम्प्र
थमा सुवाचा ॥ मूर्धन्यज्ञस्य मधुना दधाना प्राचीनञ्ज्योतिर्हविषा वृधातः॥७॥
तिस्रो देवीर्हविषा वर्धमाना इन्द्रञ्जुषाणा जनयो नपत्नीः ॥ अच्छिन्नन्तन्तुम्प
यसा सरस्वतीळा देवीभारती विश्वतूर्तिः ॥ ८ ॥ त्वष्टा दधच्छुष्ममिन्द्राय वृ

ष्णोऽपाकोऽर्चिष्टुर्यशसे पुरूणि ॥ वृषा यजन्वृषणम्भूरि रेता मूर्धन्यज्ञस्य समन
क्तु देवान् ॥ ९ ॥ वनस्पतिरवसृष्टो नपाशैस्त्मन्या समञ्जञ्छमितानदेवः ॥
इन्द्रस्य हव्यैर्जठरम्पृणानस्स्वदातियज्ञम्मधुनाघृतेन ॥ १० ॥ स्तोकानामिन्दुम्प्र
ति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाद् ॥ घृतप्रुषा मनसामोदमानास्स्वाहा
देवा अमृतामादयन्ताम् ॥ ११ ॥ ४

आयात्विन्द्रोवस उपन इहस्तुतस्स धमादस्तु शूरः ॥ वावृधानस्तविषीर्य
स्य पूर्वीर्द्यौर्नक्षत्र मभिभूति पुष्यात् ॥ १ ॥ आन इन्द्रो दूरादान आसादभिष्टि
कृदवसे यासदुग्रः ॥ ओजिष्ठेभिर्नृपतिर्वज्रबाहुस्सङ्गे समत्सु तुर्वणिःपृतन्यून् ॥ २॥
आन इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसेच ॥ तिष्ठाति वज्री मघवावि
रप्शीमँय्यज्ञमनु नोवाजसातौ ॥ ३ ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुह

वꣳ शूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनो मघवा धात्विन्द्रः ॥४॥
इन्द्रस्सुत्रामा स्ववाँ२अवोभिस्सुमृळीको भवतु विश्ववेदाः ॥ बाधतान्द्वेषो अ
भयङ्कृणोतु सुवीर्यस्य पतयस्स्याम ॥ ५ ॥ तस्य वयꣳ सुमतौ यज्ञियस्यापि
भद्रे सौमनसे स्याम ॥ स सुत्रामा स्ववाँ२इन्द्रो अस्मेआराच्चिद्द्वेषस्सनुतर्युयो
तु ॥ ६ ॥ आमन्द्रैरिन्द्रहरिभिर्याहि मयूररोमभिः ॥ मात्वाकेचिन्नियमन्वि
न्नपाशिनोति धन्वेव ताँ२इहि ॥ ७ ॥ एवेदिन्द्रँवृषणँवज्रबाहुँवसिष्ठासोअभ्य
र्चन्त्यर्कैः ॥ सनस्तुतो वीरवद्धातु गोमद्यूयम्पातस्वस्तिभिस्सदानः ॥ ८ ॥ ५
समिद्धो अग्निरश्विना तप्तो घर्मो विराट्सुतः ॥ दुहे धेनुस्सरस्वती सोमꣳ
शुक्रमिहेन्द्रियम् ॥ १ ॥ तनूपा भिषजा सुतेऽश्विनोभा सरस्वती ॥ मध्वारजाꣳ
सीन्द्रियमिन्द्राय पथिभिर्वहान् ॥२॥ इन्द्रायेन्दुꣳ सरस्वती नराशꣳसेन नग्नहुम् ॥

अधातामश्विना मधु भेषजम्भिषजा सुते ॥ ३ ॥ आजुह्वाना सरस्वतीन्द्रायै
न्द्रियाणि वीर्यम् ॥ इळाभिरश्विना इषꣳ समूर्जꣳ सꣳ रयिन्दधुः ॥ ४ ॥ अश्विना
नमुचेस्सुतꣳ सोमꣳ शुक्रम्परिस्रुता ॥ सरस्वती तमाभरद्बर्हिषेन्द्राय पातवे ॥ ५ ॥
कवष्यो नव्यचस्वतीरश्विभ्यान्नदुरो दिशः ॥ इन्द्रोन रोदसी उभेदुहे कामान्त्स
रस्वती ॥ ६ ॥ उषासानक्तमश्विनादिवेन्द्रꣳ सायमिन्द्रियैः ॥ सञ्जानाने सुपेशसा
समञ्जाते सरस्वत्या ॥ ७ ॥ पातन्नो अश्विनादिवा पाहि नक्तꣳ सरस्वती ॥ दै
व्या होतारा भिषजा पातमिन्द्रꣳ सचासुते ॥ ८ ॥ तिस्रस्त्रेधा सरस्वत्यश्विना
भारतीळा॥तीव्रम्परिस्रुता सोमामिन्द्राय सुषुवुर्मदम् ॥ ९ ॥ अश्विना भेषजम्म
धु भेषजन्नस्सरस्वती ॥ इन्द्रे त्वष्टा यशः श्रियꣳ रूपꣳ रूपमधुस्सुते ॥ १० ॥
ऋतुथेन्द्रो वनस्पतिश्शशमानःपरिस्रुता ॥ कीलालमश्विभ्याम्मधु दुहे धेनुस्सर

स्वती ॥ ११ ॥ गोभिर्न सोममश्विना मासरेण परिस्रुता ॥ समधातꣳ सरस्वत्या स्वाहेन्द्रे सुतम्मधु ॥ १२ ॥ ६

अश्विना हविरिन्द्रियन्नमुचेर्धिया सरस्वती ॥ आशुक्रमासुराद्वसुमघमिन्द्राय जभ्रिरे ॥ १ ॥ यमश्विना सरस्वती हविषेन्द्रमवर्द्धयन् ॥ स बिभेद बलम्मघन्नमुचा आसुरे सचा ॥ २ ॥ तमिन्द्रम्पशवस्सचाश्विनोभा सरस्वती॥ दधाना अभ्यनूषत हविषा यज्ञ इन्द्रियैः ॥३॥ य इन्द्र इन्द्रियन्दधुस्सविता वरुणो भगः ॥ स सुत्रामा हविष्पतिर्यजमानाय सश्चत ॥४॥ सविता वरुणो दधद्यजमानाय दाशुषे ॥ आदत्तनमुचेर्वसु सुत्रामा बलमिन्द्रियम् ॥५॥ वरुणःक्षत्रमिन्द्रियम्भगेन सविता श्रियम् ॥ सुत्रामा यशसा बलन्दधाना यज्ञमाशत ॥६॥ अश्विना गोभिरिन्द्रिय मश्वेभिर्वीर्यम्बलम् ॥ हविषेन्द्रꣳ सरस्वती यजमानमवर्द्धयन् ॥७॥

ताना सत्या सुपेशसा हिरण्य वर्तनी नरा ॥ सरस्वती हविष्मतीन्द्र कर्मसु नोऽ
वत ॥ ८ ॥ ताभिषजा सुकर्मणा सासुदुघा सरस्वती ॥ सर्वृत्रहा शतक्रतुरि
न्द्राय दधुरिन्द्रियम् ॥ ९ ॥ युवꣳ सुराममश्विना नमुचा आसुरे सचा ॥ विपि
पानास्सरस्वतीन्द्रङ्कर्मस्वावत ॥ १० ॥ पुत्रमिव पितरा अश्विनो भेन्द्रावथुःका
व्यैर्दꣳसनाभिः ॥ यत्सुरामँव्व्यपिबश्शचीभिस्सरस्वती त्वामघवन्नभिष्णक् ॥११॥
यस्मिन्नश्वास ऋषभासउक्षणो वशामेषा अवसृष्टास आहुताः ॥ कीलालपेसो
मपृष्ठाय वेधसे हृदामतिञ्जनयचारुमग्नये ॥ १२ ॥ अहाव्यग्ने हविरास्येते स्रुची
वघृतञ्चम्वीव सोमः ॥ वाजसनिꣳ रयिमस्मे सुवीरम्प्रशस्तन्धेहियशसम्बृहन्त
म् ॥ १३ ॥ ७

अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम् ॥ वाचेन्द्रो बलेनेन्द्रायद

धुरिन्द्रियम् ॥ १ ॥ गोमद्दूषुणा सत्याश्वावद्यातमश्विना ॥वर्त्तीरुद्रानृपाय्यम् ॥ २ ॥
नयत्परोनान्तर आदधर्षद्वृषण्वसू ॥ दुश्शꣳ सोमत्यौरिपुः ॥ ३ ॥ तान आ
वोह्ळमश्विना रयिम्पिशङ्ग सन्दृशम् ॥ धिष्ण्यावरिवोविदम् ॥ ४ ॥ पाव
कानस्सरस्वती वाजेभिर्वाजिनीवती ॥ यज्ञँवष्टुधियावसुः ॥ ५ ॥ चोदयित्री
सूनृतानाञ्चेतन्ती सुमतीनाम् ॥ यज्ञन्दधे सरस्वती ॥ ६ ॥ महो अर्णस्स
रस्वती प्रचेतयति केतुना ॥ धियो विश्वा विराजति ॥ ७ ॥ इन्द्रायाहि चि
त्रभानो सुता इमे त्वायवः ॥ अण्वीभिस्तना पूतासः ॥ ८ ॥ इन्द्रायाहिधि
येषितो विप्रजूतस्सुतावतः ॥ उपब्रह्माणि वाघतः ॥ ९ ॥ इन्द्रायाहि तूतुजा
नउपब्रह्माणि हरिवः ॥ सुते दधिष्व नश्चनः ॥ १० ॥ अश्विना पिबताम्मधु
सरस्वत्या सजोषसा ॥ इन्द्रस्सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यम्मधु ॥११॥ ८

हरिःॐ ॥

यद्देवाअष्ट ॥ ८ ॥ अभ्यादधामीतिच ॥८॥ योभूतानाञ्चतस्रः ॥ ४ ॥ सामिद्धइन्द्रएकादश ॥ ११ ॥ आयात्वष्ट ॥ ८ ॥ समिद्धोअग्निर्द्वादश ॥ १२॥ अश्विनाहविस्त्रयोदश ॥ १३ ॥ अश्विना तेजसैकादश ॥ ११ ॥ अष्टानुवाकेषुपञ्चसप्ततिः ॥ ७५ ॥ इतिशुक्लयजुर्वेदकाण्वसँहितापाठेद्वाविंशत्यध्यायः ॥ हरिःॐ ॥

हरिःॐ ॥ इमम्मे वरुण श्रुधीहवमद्याच मृळय ॥ त्वामवस्युराचके ॥ १ ॥ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेळमानो वरुणेह बोध्युरुशꣳ समान आयुः प्रमोषीः ॥ २ ॥ त्वन्नोअग्ने वरुणस्य विद्वान्देवस्य हेळो अवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमश्शोशुचानो विश्वाद्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥ ३ ॥ सत्वन्नो अग्नेऽवमोभवोतीनेदिष्ठो अस्या उषसो व्युष्टौ ॥ अ

वेयक्ष्वनो वरुणꣳ रराणोवी हिमृळीकꣳ सुहवोन एधि ॥ ४ ॥ महीमूषुमातरꣳ
सुव्रतानामृतस्य पत्नीमवसे हुवेम ॥ तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदि
तिꣳ सुप्रणीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीन्द्यामनेहसꣳ सुशर्माणमदितिꣳ सु
प्रणीतिम् ॥ दैवीन्नावꣳ स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ॥ ६ ॥ सु
नावमारुहेयमस्रवन्तीमनागसम् ॥ शतारित्राꣳ स्वस्तये ॥ ७ ॥ आनोमित्रा
वरुणा घृतैर्गव्यूतिमुक्षतम् ॥ मध्वारजाꣳसि सुक्रतू ॥ ८ ॥ प्रबा हवासि स्तृत
श्रीवसेन आनो गव्यूतिमुक्षतङ्घृतेन ॥ आमाजनैश्रवयतँय्युवानाश्रतम्मेमित्रा
वरुणा हवेम ॥ ९ ॥ शन्नो भवन्तु वाजिनोहवेषु देवतातामितद्रवस्स्वर्काः ॥
जम्भयन्तोऽहिंव्वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः ॥ १० ॥ तेनोअर्वन्तो
हवनश्रुतो हवँव्विश्वे शृण्वन्तु वाजिनो मितद्रवः ॥ सहस्रसा मेधसाता इव

त्मना महो येधनꣳ समिथेषु जभ्रिरे ॥ ११ ॥ वाजे वाजेऽवत वाजिनो नोधने षुविप्राअमृता ऋतज्ञाः ॥ अस्यमध्वः पिबतमादयध्वन्तृप्तायात पथिभिर्देवयानैः ॥ १२ ॥ १

समिद्धो अग्निस्समिधा सुसमिद्धो वरेण्यः ॥ गायत्रीच्छन्द इन्द्रियन्त्र्यविर्गौर्वयोदधुः ॥ १ ॥ तनूनपाच्छुचिव्रतस्तनूपाश्चसरस्वती ॥ उष्णिहाच्छन्द इन्द्रियन्दित्यवाड्गौर्वयो दधुः ॥ २ ॥ इळाभिरग्निरीड्यस्सोमो देवो अमर्त्यः ॥ अनुष्टुप्छन्द इन्द्रियम्पञ्चाविर्गौर्वयो दधुः ॥ ३ ॥ सुबर्हिरग्निः पूषण्वान्त्स्तीर्णबर्हिरमर्त्यः ॥ बृहतीच्छन्द इद्रियन्त्रि वत्सोगौर्वयो दधुः ॥ ४ ॥ दुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः॥पङ्क्तिश्छन्द इहेन्द्रियन्तुर्यवाड्गौर्वयो दधुः ॥ ५ ॥ उषे यह्वी सुपेशसा विश्वे देवा अमर्त्याः ॥ त्रिष्टुप्छन्द इहेन्द्रियम्पष्ठवाड्गौर्वयो

दधुः ॥ ६ ॥ दैव्या होतारा भिषजेन्द्रेण सयुजा युजा ॥ जगतीच्छन्द इन्द्रिय
मनड्वान्गौर्वयो दधुः ॥७॥ तिस्रइळा सरस्वती भारती मरुतो विशः ॥ विरा
ट्छन्द इहेन्द्रियन्धेनुर्गौर्नवयो दधुः ॥ ८ ॥ त्वष्टा तुरीपो अद्भुत इन्द्राग्नी पुष्टि
वर्धना ॥ द्विपदाच्छन्द इन्द्रियमुक्षागौर्नवयो दधुः ॥ ९ ॥ शमितानो वनस्पति
स्सविता प्रसुवन्भगम् ॥ ककुप् छन्द इहेन्द्रियँव्वशा वेहद्वयो दधुः ॥ १० ॥ स्वा
हा यज्ञँव्वरुणस्सुक्षत्रो भेषजङ्करत् ॥ अतिच्छन्दा इन्द्रियम्बृहदृषभोगौर्वयो
दधुः ॥ ११ ॥ २

वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुताः ॥ रथन्तरेण तेजसा हविरिन्द्रे
वयो दधुः ॥ १ ॥ ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुताः ॥ बृहताय
शसा बलँ हविरिन्द्रे वयो दधुः ॥ २ ॥ वर्षाभि ऋतुना दित्या स्तोमे सप्त

दशे स्तुताः ॥ वैरूपेण विशौजसा हविरिन्द्रे वयो दधुः ॥ ३ ॥ शारदेन ऋ
तुना देवा एकविꣳश ऋभवं स्तुताः ॥ वैराजेन श्रिया श्रियꣳ हविरिन्द्रे वयो
दधुः ॥ ४ ॥ हेमन्तेन ऋतुना देवास्त्रिणवे मरुतं स्तुताः ॥ बलेन शक्करी
स्सहो हविरिन्द्रे वयो दधुः ॥ ५ ॥ शैशिरेण ऋतुना देवास्त्रय स्त्रिꣳशेऽ मृता
स्तुताः ॥ सत्येन रेवतीः क्षत्रꣳ हविरिन्द्रे वयो दधुः ॥ ६ ॥ ३ ॥

होता यक्षत्समिधाग्नि मिळस्पदेऽश्विनेन्द्रꣳ सरस्वती मजो धूम्रोन गोधूमैः
कुवलैर्भेषजम्मधु ॥ शष्पै र्न तेज इन्द्रिय म्पयस्सोमः परिस्रुता घृतम्मधु व्य
न्त्वा ज्यस्य होतर्यज ॥ १ ॥ होता यक्ष त्तनूनपा त्सरस्वतीमविर्मेषो नभेष
जम्पथा मधुमता भरन्नश्विनेन्द्राय वीर्यम् ॥ बदरै रुपवाका भिर्भेषजन्तो क्म
भिः पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वा ज्यस्य होतर्यज ॥ २ ॥ होता य

क्षन्नरा शꣳ सन्न नम्नहुम्पतिꣳ सुरया भेषजम्मेषस्सरस्वती भिषग्रथोन चन्द्र्य
श्विनो वपा इन्द्रस्य वीर्यम् ॥ बदरै रुपवाका भिर्भेषजन्तो क्मभिःपयस्सोमः
परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३ ॥ होता यक्षदिळेळित आजु
ह्वा नस्सरस्वती मिन्द्रम्बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय भेषजम् ॥
यवैःकर्कन्धु भिर्मधुलाजै र्नमास रम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य
होतर्यज ॥ ४ ॥ होता यक्षद्बर्हि रूर्ण म्रदा भिषङ्ना सत्या भिषजा श्विना
श्वाशिशुमती भिषग्धेनुस्सरस्वती भिषक् ॥ दुह इन्द्राय भेषज म्पयस्सोमः
परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ५ ॥ होता यक्षद्दुरो दिशः
कवष्योन व्यचस्वती राश्विभ्यान्न दुरो दिश इन्द्रोन रोदसी दुघे दुहे धेनुस्सर
स्वत्यश्विनेन्द्राय भेषजम् ॥ शुक्रन्न ज्योतिरिन्द्रियम्पयस्सोमःपरिस्रुता घृतम्म

धु व्यन्त्वा ज्यस्य होतर्यज ॥ ६ ॥ होता यक्षत्सुपेशसोषेनक्तन्दिवाश्विना
समञ्जाते सरस्वत्या त्विषिमिन्द्रेन भेषजम् ॥ श्येनो न रजसा हृदाश्रियान
मासं रम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वा ज्यस्य होतर्यज ॥ ७ ॥ हो
ता यक्षद्दैव्या होतारा भिषजाश्विनेन्द्रन्न जागृवि दिवानक्तन्न भेषजैः ॥ शूषꣳ
सरस्वती भिषक्सीसेन दुह इन्द्रियम्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वा ज्यस्य
होतर्यज ॥ ८ ॥ होता यक्षत्तिस्रो देवी न भेषजन्त्रयस्त्रिधा तवोपसो रूपमि
न्द्रे हिरण्ययमश्विनेळा न भारती ॥ वाचा सरस्वती मह इन्द्राय दुह इन्द्रि
यम्पय स्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ९ ॥ होता यक्ष
त्सुरे तस मृषभन्नर्यां प सन्त्वष्टारमिन्द्र मश्विना भिषजन्न सरस्वती मोजो न
जूतिरिन्द्रि यँ वृको नरभसो भिषक् ॥ यशस्सुरया भेषजꣳ श्रिया न मासर

म्पयस्सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ १० ॥ होता यक्षद्व
नस्पतिꣳ शमितारꣳ शतक्रतुम्भीमन्न मन्युꣳ राजानँ व्याघ्रन्नमसाश्विना ॥
भामꣳ सरस्वती भिषगिन्द्राय दुह इन्द्रियम्पयस्सोमः परिस्रुता घृतम्मधु व्य
न्त्वाज्यस्य होतर्यज ॥ ११ ॥ होता यक्षदग्निꣳ स्वाहाज्यस्य स्तोकानाꣳ स्वा
हा मेदसाम्पृथक्स्वाहा च्छागमश्विभ्याꣳ स्वाहा मेषꣳ सरस्वत्यै ॥ स्वाहर्षभ
भ मिन्द्राय सिꣳहाय सहस इन्द्रियꣳ स्वाहाग्निन्न भेषजꣳ स्वाहा सोम मि
न्द्रियम् ॥ स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारँवरुणम्भिषजाम्पतिꣳ स्वाहा वनस्प
तिम्प्रियम्पाथोन भेषजम् ॥ स्वाहा देवा आज्यपा जुषाणो अग्निर्भेषजम्पयस्सो
मः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ १२ ॥ ४

होता यक्षदश्विनौ छागस्य वपाया मेदसो जुषेताꣳ हविर्होतर्यज ॥ होता यक्ष

त्सरस्वतीम्मेषस्य वपायामेदसो जुषताँ॑ हविर्होतर्यज ॥ होता यक्षदिन्द्रमृष
भस्य वपायामेदसो जुषताँ॑ हविर्होतर्यज ॥ १ ॥ होता यक्षदश्विनौ सरस्वती
मिन्द्रँ॑ सुत्रामाणमिमेसोमाः॥सुरामाणश्छागैर्नमेषै ऋषभैस्सुताः ॥ शष्पैर्नतोक्म
भिर्लाजैर्महस्वन्तो मदामासरेण परिष्कृताः ॥ शुक्राः पयस्वन्तोऽमृताः प्रस्थिता
वो मधुश्च्युतस्तानाश्विना सरस्वतीन्द्रस्सुत्रामा वृत्रहा जुषन्ताँ॑ सोम्यम्मधु ॥
पिबन्तु मदन्तु व्यन्तु होतर्यज ॥ २ ॥ होता यक्षदश्विनौ छागस्य हविष
आत्ता मद्य मध्यतो मेद उद्भृतम्पुरा द्वेषोभ्यःपुरा पौरुषेय्याग्रृभः ॥ घस्तान्नू
नङ्घासे अज्राणाँय्यवस प्रथमानाँ॑ सुमत्क्षराणाँ॑ शत रुद्रियाणा मग्निष्वात्ताना
म्पीवो पवसनानाम् ॥ पार्श्वतःश्रोणितश्शिता मतउत्सादतोऽङ्गादङ्गादवत्तानाङ्क
रत एवाश्विनाजुषेताँ॑ हविर्होतर्यज ॥ होता यक्षत्सरस्वतीम्मेषस्य हविष आव

य द्य मध्यतो मेद उद्धृतम्पुरा द्वेषोभ्यः पुरापौरुषेय्या गृभः ॥ घसन्नूनङ्घासे
अज्राणाँय्यवस प्रथमानाᳪं सुमत्क्षराणाᳪं शत रुद्रियाणा मग्निष्वात्ता नाम्पीवो
पवसनानाम् ॥ पार्श्वतः श्रोणितः शिता मतउत्सादतोऽङ्गादङ्गा दवत्तानाङ्करदे
वᳪं सरस्वती जुषताᳪं हविर्होतर्यज ॥ होता यक्षदिन्द्रमृषभस्य हविष आवय
द्य मध्यतो मेद उद्धृतम्पुरा द्वेषोभ्यःपुरा पौरुषेय्या गृभः ॥ घसन्नूनङ्घासे अ
ज्राणाँय्यवसप्रथमानाᳪं सुमत्क्षराणाᳪंशतरुद्रियाणा मग्निष्वात्तानाम्पीवो पवस
नानाम् ॥ पार्श्वतःश्रोणितःशिता मतउत्सादतोऽङ्गादङ्गादवत्तानाङ्कर देवमिन्द्रो
जुषताᳪं हविर्होतर्यज ॥ ३ ॥ होता यक्षद्वनस्पतिं मभिहि पिष्टतमया रभिष्ठ
या रशनयाधित ॥ यत्राश्विनोश्छागस्य हविषः प्रिया धामानि यत्र सरस्वत्या
मेषस्य हविषः प्रिया धामानि यत्रेन्द्रस्य ऋषभस्य हविषः प्रिया धामानि ॥ यत्रा

ग्नेः प्रिया धामानि यत्र सोमस्य प्रिया धामानि यत्रेन्द्रस्य सुत्राम्णः प्रिया धामानि ॥ यत्र सवितुः प्रिया धामानि यत्र वरुणस्य प्रिया धामानि यत्र वनस्पतेः प्रिया पाथाᳬंसि ॥ यत्र देवानामाज्यपानाम्प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि ॥ तत्रैतान्प्रस्तुत्येवो पस्तुत्येवो पावस्त्रक्षद्रभीयस इव कृत्वी कर्देवन्देवो वनस्पतिर्जुषताᳬं हविर्होतर्यज ॥ ४ ॥ होता यक्षदग्निᳬं स्विष्टकृतमयाळग्निरश्विनो श्छागस्य हविषः प्रियाधामान्ययाट् सरस्वत्या मेषस्य हविषः प्रियाधामान्ययाळिन्द्रस्य ऋषभस्य हविषः प्रिया धामानि ॥ अयाळग्नेः प्रिया धामान्ययाट्सोमस्य प्रिया धामान्ययाळिन्द्रस्य सुत्राम्णः प्रियाधामानि ॥ अयाट्सवितुः प्रिया धामान्ययाड्वरुणस्य प्रिया धामान्ययाड्वनस्पतेः प्रिया पाथाᳬंसि ॥ अयाड्देवानामाज्यपानाम्प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि ॥ यक्षत्स्वम्महिमान

मायं जतामेज्याइषः कृणोतु सो अध्वरा जातवेदा जुषताँ हविर्होतर्यज ॥५॥ ५
देवम्बर्हिस्सरस्वती सुदेवमिन्द्रे अश्विना ॥ तेजोन चक्षुरक्ष्योर्बर्हिषा दधु
रिन्द्रियँव्वसुवने वसुधेयस्य व्यन्तु यज ॥ १ ॥ देवीर्द्वारो अश्विना भिषजेन्द्रे
सरस्वती ॥ प्राणन्नवीर्यन्नसि द्वारो दधुरिन्द्रियँव्वसुवने वसुधेयस्य व्यन्तुयज
॥ २ ॥ देवी उषासा अश्विना सुत्रामेन्द्रे सरस्वती ॥ बलन्नवाचं मास्य उ
षाभ्यान्दधुरिन्द्रियँव्वसुवने वसु धेयस्य व्यन्तु यज ॥ ३ ॥ देवी जोष्ट्री सरस्व
त्यश्विनेन्द्रमवर्द्धयन् ॥ श्रोत्रन्नकर्णयोर्यशो जोष्ट्रीभ्यान्दधुरिन्द्रियँव्वसुवने व
सुधेयस्य व्यन्तु यज ॥ ४ ॥ देवी ऊर्जाहुती दुघे सुदुघेन्द्रे सरस्वत्यश्विनाभि
षजावतः ॥ शुक्रन्नज्योतिस्तनयो राहुती धत्त इन्द्रियँव्वसुवने वसुधेयस्य व्य
न्तुयज ॥ ५ ॥ देवा देवानाम्भिषजा होतारा इन्द्रमश्विना वषट्कारैस्सरस्व

ती त्विषिन्न हृदये मतिम् ॥ होतृभ्यान्दधुरिन्द्रियँव्वसुवने वसुधेयस्य व्यन्तु
यज ॥ ६ ॥ देवीस्तिस्रस्तिस्रो देवीरश्विनेळा सरस्वती ॥ शूषन्नमध्ये
नाभ्यामिन्द्राय दधुरिन्द्रियँव्वसुवने वसुधेयस्य व्यन्तु यज ॥ ७ ॥ देव इन्द्रो
नराशꣳसस्त्रि वरूथस्सरस्वत्याश्विभ्यामीयते रथः ॥ रेतोन रूपममृतञ्जनित्र
मिन्द्राय त्वष्टा दधदिन्द्रियाणि वसुवने वसुधेयस्य व्यन्तु यज ॥ ८ ॥ देवो
देवैर्वनस्पतिर्हिरण्य पर्णो अश्विभ्याꣳ सरस्वत्या सुपिप्पल इन्द्राय पच्यते मधु ॥
ओजोन जूतिर्ऋषभो नभामँव्वनस्पतिर्नो दधदिन्द्रियाणि वसुवने वसुधेयस्यव्य
न्तु यज ॥ ९ ॥ देवम्बर्हिर्वारितीना मध्वरे स्तीर्णमश्विभ्यामूर्णम्रदास्सरस्वत्या
स्योनमिन्द्रते सदः ॥ ईशायै मन्युꣳ राजानम्बर्हिषा दधुरिन्द्रियँव्वसुवने वसु
धेयस्य व्यन्तु यज ॥ १० ॥ देवो अग्निस्स्विष्ट कृद्देवा न्यक्षद्यथा यथꣳ होतारा

इन्द्रमश्विना वाचा वाचꣳ सरस्वती मग्निꣳ सोमꣳ स्विष्टकृत् ॥ स्विष्टइन्द्रस्सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिस्स्विष्टादेवा आज्यपाः ॥ स्विष्टो अग्निरग्निना होताहोत्रे स्विष्टकृद्यशो नदधदिन्द्रिय मूर्जमपचितिꣳ स्वधाँव्वसुवने वसुधेयस्य व्यन्तु यज ॥ ११ ॥ अग्निमद्यहोतारमवृणी तायँय्यजमानःपचन्पक्तीः पचन्पुरोळाशान्बध्नन्नश्विभ्याञ्छागꣳ सरस्वत्यै मेषमिन्द्राय ऋषभम् ॥ सुन्वन्नाश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान् ॥ १२ ॥ सूपस्थाअद्यदेवो वनस्पतिरभवदाश्विभ्याञ्छागेन सरस्वत्यै मेषेणेन्द्राय ऋषभेण ॥ अक्षꣳस्तान्मे दस्तःप्रति पचतागृभीषतावी वृधन्त पुरोळाशैरपुरश्विना सरस्वतीन्द्रस्सुत्रामा सुरासोमान् ॥ १३ ॥ त्वामद्य ऋषआर्षेय ऋषीणान्नपाद वृणीतायँय्यजमानो बहुभ्य आसङ्गतेभ्य एषमे देवेषु वसुवार्यायक्ष्यतइति ॥ तायादेवा

देवदा नान्यदुस्तान्यस्मा आचशा स्वाचं गुरस्त्रेषितश्च होतरसिं भद्रवाच्यायप्रे षितो मानुषस्सूक्त वाकाय सूक्ताब्रूहि ॥ १४ ॥ ६ ॥ हरिःॐ ॥

इमम्मे वरुण द्वादश ॥ १२ ॥ समिद्धो अग्निरेकादश ॥ ११ ॥ वसन्तेन षट् ॥ ६ ॥ होतायक्षद्द्वादश ॥ १२ ॥ होतायक्षदश्विनो छागस्य पञ्च ॥ ५ ॥ देवम्बर्हिं श्चतुर्दश ॥ १४ ॥ षळनुवाकेषु षष्टिः ॥ ६० ॥ कृष्णइमम्मेषष्टिः

समिद्धोऽग्निर्गायत्री ऽयविस्वनून पोष्णिहाम् ॥ इळाभिरनुष्टुप्पश्चा विस्सुब र्हिर्बृहत्यथ ॥ १ ॥ विवत्सो हि दुरःपङ्क्ति श्छन्दो वै तुर्यवाट्तथा ॥ उषे त्रिष्टु प्पष्ठवाट्च दैव्या वै जगत्यथ ॥ २ ॥ अनड्वाँस्तिस्त्रइळा विराड्धेनुस्ततःपरम् ॥ त्वष्टानु द्विपदा मुक्षा शमिताच ककुब्वशा ॥ ३ ॥ स्वाहा यज्ञ मतिच्छन्दा बृह द्वौश्च वयोदधुः ॥ वसन्तेनच वसवो रथन्तर मितिस्मृताः ॥ ४ ॥ ग्रीष्मेण रुद्रा

बृहता वर्षादित्याःक्रमेणाहि ॥ वैरूपेणपुन बौध्याःशारदेनैकविंशः ॥ ५ ॥ वैरा
जेनाथ हेमन्त स्त्रिणवोहिबलेनच ॥ शैशिरेण त्रयस्त्रिंशो सत्येन रेवतीस्तथा ॥ ६ ॥
होतायक्ष त्समिच्छषैपे स्तनूनपाद्वदैरुप ॥ नरा शम्बदरे हीळे ळितश्चतु यवै
स्ततः ॥ ७ ॥ कर्कम्बर्हि दुहे वेहि दुरःशुक्रं सुपे श्यनः ॥ दैव्या शूषश्च तिस्रश्च
वाचा सरस्वती महः ॥ ८ ॥ सुरेतसं यशो वैच वनस्पतिंहिभामितः ॥ अग्नितु
ऋषभ मिन्द्रं स्वाहा देवा वदेत्क्रमम् ॥ ९ ॥ होता यक्षदश्विनौ छागस्याश्वि
नौ सरस्वतिम् ॥ होतायक्षदाश्विनौचच्छागस्याथ वनस्पतिम् ॥ १० ॥ अग्निं
स्विष्टकृतन्देवं बर्हिस्तेजोन चक्षुः ॥ देवीद्वारःप्राणन्देवी उषासा बलमतःपर
म् ॥ ११ ॥ देवीजोष्ट्री श्रोत्रन्देवी ऊर्जाहुती दुघेतथा ॥ शुक्रश्च देवा देवा
नां होता देवीस्तु तिस्रः ॥ १२ ॥ शूषश्च देव इन्द्रश्च रेतो देवश्च देवः ॥

ओजोन जूतिर्देवश्च बर्हिरीशा क्रमेणतु ॥ १३ ॥ देवोऽग्निस्विष्ट कृद्देवानग्निम
घसु न्वन्यथा ॥ सूपस्था अद्यदेऽवोथा क्षंस्तान्मेद एवाहि ॥ १४ ॥ त्वामद्यऋ
ष आर्षेय इतिनित्यं पठन्नरः ॥ स वाङ्गनिपुणोभूत्वा मोदतेहिसदा बुधः ॥ १५ ॥

हरिः ॐ ॥ तेजोऽसि शुक्रममृतमायुष्पाआयुर्मे पाहि ॥ देवस्य त्वा सवि
तुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्यामाददे ॥ १ ॥ इमामगृभ्णन्रशनामृतस्य
पूर्व आयुषि विदथेषु कव्या ॥ सानो अस्मिन्त्सुत आबभूव ऋतस्य सामन्त्सर
मारपन्ती ॥ २ ॥ अभिधा असि भुवनमसियन्तासि धर्ता ॥ सत्वमग्निंवैश्वानर
ँ सप्रथ सङ्गच्छ स्वाहा कृतस्स्वगात्वा देवेभ्यः ॥ ३ ॥ प्रजापतये ब्रह्मन्नश्वम्भ
न्त्स्यामिदेवेभ्यःप्रजापतये तेन राध्यासम् ॥ तम्बधान देवेभ्यः प्रजापतये तेन
राध्नुहि ॥ प्रजापतये त्वा जुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वा जुष्टम्प्रोक्षामि वायवे

त्वा जुष्टम्प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामि ॥ ४ ॥ यो अर्वन्तञ्जिघांꣳसतितमभ्यमीतिवरुणः ॥ परो मर्तः परःश्वा ॥ ५ ॥ १

अग्नये स्वाहा सोमाय स्वाहा पाम्मोदाय स्वाहा सवित्रे स्वाहा वायवे स्वाहा विष्णवे स्वाहा ॥ इन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ॥ १ ॥ २

हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहा वक्रन्दाय स्वाहा ॥ प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा ॥ १ ॥ निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहा ॥ आसीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा ॥ २ ॥ कूजते स्वाहा

प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा ॥ सꣳहानाय स्वा
होपस्थिताय स्वाहा यनाय स्वाहा प्रायणाय स्वाहा ॥ ३ ॥ यते स्वाहा धावते
स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा ॥ शूकाराय स्वाहा शूकृताय स्वाहा निष
ण्णाय स्वाहोत्थिताय स्वाहा ॥ ४ ॥ जवाय स्वाहा बलाय स्वाहा विवर्तमा
नाय स्वाहा विवृत्ताय स्वाहा ॥ विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रू
षमाणाय स्वाहा शृण्वते स्वाहा ॥ ५ ॥ ईक्षमाणाय स्वाहेक्षिताय स्वाहा वी
क्षिताय स्वाहा निमेषाय स्वाहा ॥ यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा
यन्मूत्रङ्करोति तस्मै स्वाहा कुर्वते स्वाहा कृताय स्वाहा ॥ ६ ॥ ३

तत्स वितुर्वरेण्यम्भर्गो देवस्य धीमहि ॥ धियो योनः प्रचोदयात् ॥ १ ॥
हिरण्यपाणि मूतये सवितार मुपह्वये ॥ सचेत्ता देवता पदम् ॥ २ ॥ देव

स्य चेतंतो महीम्प्रसं वितुर्हवामहे ॥ सुमतिꣳ सत्यराधसम् ॥ ३ ॥ सुष्टुतिꣳ
सुमती वृधो रातिꣳ सवितुरीमहे ॥ प्रदेवाय मतीविदे ॥ ४ ॥ रातिꣳ सत्प
तिम्महे सवितारमुपह्वये ॥ आसवन्देववीतये ॥ ५ ॥ देवस्य सवितुर्मतिमा
सवँविश्वदेव्यम् ॥ धियाभर्गम्मनामहे ॥ ६ ॥ अग्निꣳ स्तोमेन बोधय समि
धानो अमर्त्यम् ॥ हव्या देवेषु नोदधत् ॥ ७ ॥ सहव्यवाळमर्त्य उशिग्दूत
श्चनो हितः ॥ अग्निर्धिया समृण्वती ॥ ८ ॥ तन्त्वा घृतस्न ईमहे चित्रभानो
स्वर्विदम् ॥ देवाँ२आवीतये वह ॥ ९ ॥ अग्निन्दूतम्पुरो दधे हव्यवाह मुप
ब्रुवे ॥ देवाँ२आसादयादिह ॥ १० ॥ ४

अजी जनोहि पवमानसूर्यंविधारेशक्मना पयः ॥ गोजीरयारꣳहमाणः
पुरन्ध्या ॥ १ ॥ ५

विभूर्मात्ता प्रभूःपित्राश्वोऽसि हयोऽस्यत्योऽसि मयोऽस्यर्वासि सप्तिरसि वाज्य सि वृषासि नृमणाअसि ॥ ययुर्नामासि शिशुर्नामास्यादित्यानाम्पत्वान्विहि ॥ १ ॥ देवा आशा पाला एतन्देवेभ्योऽश्वम्मेधाय प्रोक्षितꣳ रक्षत ॥ इहरन्ति रिहरमता मिह धृतिरिहस्व धृतिस्स्वाहा ॥ २ ॥ ६

काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा ॥ स्वाहाधिमाधीताय स्वाहा मनःप्रजापतये स्वाहा चित्तँविज्ञाताय ॥१ ॥ अदित्यै स्वाहादित्यै मह्यैस्वाहादित्यै सुमृळीकायै स्वाहा ॥ सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा ॥ २ ॥ पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णेन रन्धिषाय स्वाहा ॥ त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा ॥ विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहा ॥ ३ ॥ विश्वो

देवस्य नेतुर्मर्तो वुरीत सख्यम् ॥ विश्वो रायइषुध्यति द्युम्नँव्वृणीत पुष्यसे स्वाहा ॥ ४ ॥ ७

आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः ॥ शूरइषव्योतिव्याधी महारथो जायताम् ॥ १ ॥ दोग्ध्रीधेनुर्वोढानड्वानाशुस्सप्तिः पुरन्धिर्योषा ॥ जिष्णूरथेष्ठास्सभेयो युवास्य यजमानस्य वीरो जायताम् ॥ २ ॥ निकामेनिकामे नःपर्जन्यो वर्षतु फलवत्योन ओषधयःपच्यन्ताम् ॥ योगक्षेमोनःकल्पताम् ॥३॥ ८

प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा ॥ चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥ १ ॥ ९

प्राच्यैदिशे स्वाहार्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै

दिशे स्वाहा ॥ ऊर्ध्वायै दिशे स्वाहार्वाच्यै दिशे स्वाहावाच्यै दिशे स्वाहा
र्वाच्यै दिशे स्वाहा ॥ १ ॥ १० ॥

अद्भ्यस्स्वाहा वार्भ्यस्स्वाहोदकाय स्वाहा तिष्ठन्तीभ्यस्स्वाहा स्रवन्तीभ्य
स्स्वाहा स्यन्दमानाभ्यस्स्वाहा ॥ कूप्याभ्यस्स्वाहा सूद्याभ्यस्स्वाहा धार्याभ्य
स्स्वाहार्णवाय स्वाहा समुद्राय स्वाहा सरिराय स्वाहा ॥ १ ॥ ११ ॥

वाताय स्वाहा धूमाय स्वाहाभ्राय स्वाहा मेघाय स्वाहा विद्योतमानाय
स्वाहा स्तनयते स्वाहा ॥ अवस्फूर्जते स्वाहा वर्षते स्वाहा वर्षते स्वाहो
ग्रँवर्षते स्वाहा शीघ्रँवर्षते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा ॥ प्रुष्ण
ते स्वाहा शीकायते स्वाहा प्रुष्वाभ्यस्स्वाहा ह्रादुनीभ्यस्स्वाहा नीहाराय
स्वाहा ॥ १ ॥ १२ ॥

अग्नये स्वाहा सोमाय स्वाहेन्द्राय स्वाहा पृथिव्यै स्वाहान्तरिक्षाय स्वाहा ॥ दिवे स्वाहा दिग्भ्यस्स्वाहाशाभ्यस्स्वाहोर्व्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ १ ॥ १३ ॥

नक्षत्रेभ्य स्स्वाहा नक्षत्रियेभ्यस्स्वाहाहोरात्रेभ्यस्स्वाहार्धमासेभ्यस्स्वाहा ॥ मासेभ्यस्स्वाहं ऋतुभ्यस्स्वाहार्तवेभ्यस्स्वाहा सँव्वत्सराय स्वाहा द्यावा पृथिवी भ्याꣳ स्वाहा ॥ १ ॥ चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यस्स्वाहा वसु भ्यस्स्वाहा ॥ रुद्रेभ्यस्स्वाहादित्येभ्यस्स्वाहा मरुद्भ्यस्स्वाहा विश्वेभ्यो देवे भ्यस्स्वाहा ॥ २ ॥ १४ ॥

मूलेभ्यस्स्वाहा शाखाभ्यस्स्वाहा वनस्पतिभ्यस्स्वाहा ॥ पुष्पेभ्यस्स्वाहा फलेभ्यस्स्वाहौषधीभ्यस्स्वाहा ॥ १ ॥ १५ ॥

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा ॥ चन्द्राय स्वाहा नक्षत्रेभ्यस्स्वाहाद्भ्यस्स्वाहौषधीभ्यस्स्वाहा ॥ वनस्पतिभ्यस्स्वाहा परिप्लवेभ्यस्स्वाहा चराचरेभ्यस्स्वाहा सरीसृपेभ्यस्स्वाहा ॥ १ ॥ १६ ॥

असवे स्वाहा वसवे स्वाहा विभुवेस्वाहा विवस्वते स्वाहा ॥ गणश्रियेस्वाहा गणपतये स्वाहा भिभुवे स्वाहाधिपतये स्वाहा ॥ १ ॥ शूषायस्वाहा सꣳसर्पाय स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहा ॥ मलिम्लुचाय स्वाहा दिवापतयेतेस्वाहा ॥ २ ॥ १७

मधवे स्वाहा माधवाय स्वाहा शुक्रायस्वाहा शुचये स्वाहा ॥ नभसेस्वाहा नभस्याय स्वाहेषाय स्वाहोर्जाय स्वाहा ॥ सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहाꣳहसस्पतये स्वाहा ॥ १ ॥ १८

वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा ॥ स्वस्स्वाहामूर्ध्ने स्वाहा व्यश्नुविनेस्वाहा ॥ अन्त्याय स्वाहान्त्यायनाय स्वाहा भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा ॥ १ ॥ १९

आयुर्यज्ञेन कल्पताꣳ स्वाहा प्राणोयज्ञेन कल्पताꣳ स्वाहापानोयज्ञेन कल्पताꣳ स्वाहा व्यानो यज्ञेन कल्पताꣳ स्वाहा ॥ उदानो यज्ञेन कल्पताꣳ स्वाहा समानो यज्ञेन कल्पताꣳ स्वाहा चक्षुर्यज्ञेन कल्पताꣳ स्वाहा श्रोत्रँय्यज्ञेन कल्पताꣳ स्वाहा ॥ वाग्यज्ञेन कल्पताꣳ स्वाहा मनोयज्ञेन कल्पताꣳ स्वाहात्मा यज्ञेन कल्पताꣳ स्वाहा पृष्ठँय्यज्ञेन कल्पताꣳ स्वाहा ॥ ब्रह्मयज्ञेन कल्पताꣳ स्वाहा यज्ञो यज्ञेन कल्पताꣳ स्वाहा ज्योतिर्यज्ञेन कल्पताꣳ स्वाहा स्वर्यज्ञेन कल्पताꣳ स्वाहा ॥ १ ॥ २०

एकस्मै स्वाहा द्वाभ्याᳪं स्वाहाशतायस्वाहैकं शताय स्वाहा ॥ व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ॥ १ ॥ २० ॥ हरिःॐ

तेजोऽसिपञ्च ॥ ५ ॥ अग्नय एका ॥ १ ॥ हिङ्कारायषट् ॥ ६ ॥ तत्सवितुर्दश ॥ १० ॥ अजीजनोह्येका ॥ १ ॥ विभूर्द्वे ॥२॥ कायचतस्त्रः ॥ ४ ॥ आब्रह्मंस्तिस्त्रः ॥ ३ ॥ प्राणाय ॥ १ ॥ प्राच्यै ॥ १ ॥ अद्भ्यः ॥ १ ॥ वाताय ॥ १ ॥ अग्नय इत्येकैका ॥ १ ॥ नक्षत्रेभ्योद्वे ॥ २ ॥ मूलेभ्यः ॥ १ ॥पृथिव्या इत्येकैका ॥ १ ॥ असवेद्वे ॥ २ ॥ मधवे ॥ १ ॥ वाजाय ॥ १ ॥ आयुर्यज्ञेन ॥ १ ॥ एकस्मा इत्येकैका ॥ १ ॥ एकविंशत्यनुवाकेषु सप्तचत्वारिᳪंशत् ॥ ४७ ॥ एषते तेजोऽसीतिच सप्तचत्वारिᳪं शत् ॥ इति शुक्ल यजुर्वेद काण्व संहिता पाठे चतुर्विंशत्यध्यायः ॥ हरिः ॐ ॥

हरिः ॐ ॥ हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातःपतिरेक आसीत् ॥ सदा
धार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥ १ ॥ उपयामगृहीतोऽसि
प्रजापतयेत्वा जुष्टङ्गृह्णाम्येषते योनिस्सूर्यस्ते महिमा ॥ यस्तेहन्त्सँव्वत्सरे म
हिमासम्बभूवयस्ते वाया अन्तरिक्षे महिमासम्बभूव ॥ यस्ते दिविसूर्ये महिमास
म्बभूव तस्मैते महिम्ने प्रजापतये स्वाहा देवेभ्यः ॥ २ ॥ १

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ॥ य ईशे अस्य
द्विपद श्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ १ ॥ उपयामगृहीतोऽसि प्रजा
पतयेत्वा जुष्टङ्गृह्णाम्येषते योनिश्चन्द्रमास्ते महिमा ॥ यस्ते रात्रौ सँव्वत्सरे
महिमासम्बभूव यस्ते पृथिव्या माग्नौमहिमा सम्बभूव ॥ यस्ते नक्षत्रेषु चन्द्र
मसि महिमा सम्बभूव तस्मैते महिम्ने प्रजापतये देवेभ्यस्स्वाहा ॥ २ ॥ २ ॥

युञ्जन्ति ब्रध्न मरुषञ्चरन्तम्परि तस्थुषः ॥ रोचन्ते रोचना दिवि ॥ १ ॥
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ॥ शोणा धृष्णू नृवाहसा ॥ २ ॥ यद्वा
तो अपो अगनीगन्प्रियामिन्द्रस्य तन्वम् ॥ एतꣳ स्तोतरनेन पथा पुनरश्वमा
वर्तयासि नः ॥ ३ ॥ वसवस्त्वाञ्जन्तु गायत्रेण च्छन्दसा रुद्रास्त्वाञ्जन्तु त्रै
ष्टुभेन च्छन्दसा ॥ आदित्या स्त्वाञ्जन्तु जागतेन च्छन्दसा ॥ ४ ॥ भूर्भुव
स्स्व र्लाजी३ञ्छाची३न्यव्ये गव्ये ॥ एतदन्नं मत्त देवा एतदन्नं मद्धि प्रजा
पते ॥ ५ ॥ कस्स्वि देका कीचरतिक उस्विज्जायते पुनः ॥ किꣳ स्विद्धि मस्य
भेषजङ्किम्वा वपनम्महत् ॥ ६ ॥ सूर्य एका कीचरति चन्द्रमा जायते पुनः ॥
अग्निर्हिमस्य भेषजम्भूमिरावपनम्महत् ॥ ७ ॥ कास्विदासीत्पूर्वचित्तिःकिꣳ
स्विदासीद्बृहद्वयः ॥ कास्विदासीत्पिलिप्पिला कास्विदासीत्पिशङ्गिला ॥ ८ ॥

द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः ॥ अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ॥ ९ ॥ ३

वायुष्ट्वा पचतैरवत्वसितग्रीवश्छागैः ॥ न्यग्रोधश्चमसैश्शल्मलिर्वृध्या ॥ १ ॥ एषस्यराथ्यो वृषा पड्भिश्चतुर्भिरेदगन् ॥ ब्रह्माकृष्णश्चनोऽवतु नमोऽग्नये ॥ २ ॥ सꣳशितो रश्मिना रथस्सꣳशितो रश्मिना हयः ॥ सꣳशितो अप्स्वप्सुजा ब्रह्मा सोम पुरोगवः ॥ ३ ॥ स्वयँवाजिꣳस्तन्वङ्कल्पयस्व स्वयँय्यजस्व स्वयञ्जुषस्व ॥ महिमातेऽन्येन नसन्नशे ॥४॥ नवाउएतन्म्रियसे नरिष्यसि देवाँ२इदेषि पथिभिस्सुगेभिः ॥ यत्रासते सुकृतो यत्रतेय युस्तत्र त्वा देवस्सविता दधातु ॥५॥ अग्निः पशुरासीत्तेनायजन्त सएतँल्लोकमजय द्यस्मिन्नग्निः ॥ सते लोकोभविष्यति तज्जेष्यसि पिबैता अपः ॥ वायुः पशुरासीत्तेनायजन्त सएतँल्लोकमजयद्यस्मि

न्वायुः ॥ सतेँ लोकोभविष्यति तञ्जेष्यसि पिबेता अपः ॥ सूर्यः पशुरासीत्तेना यजन्त सएतँल्लोकमजय द्यस्मिन्त्सूर्यः ॥ सतेलोको भविष्यति तञ्जेष्यसि पिबेता अपः ॥ ६ ॥ ४

प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा ॥ अम्बे अम्बिकेऽम्बालिके नमानयति कश्चन ॥ ससस्त्यश्वकस्सुभद्रिकाङ्काम्पील वासिनीम् ॥ १ ॥ गणानान्त्वा गणपतिँ हवामहे प्रियाणान्त्वा प्रियपतिँ हवामहे ॥ निधीनान्त्वा निधिपतिँ हवामहे वसो मम ॥ २ ॥ आह मजानि गर्भधमात्वमजासि गर्भधम् ॥ ताउभौ चतुरः पदस्सम्प्रसारयाव ॥ स्वर्गे लोके प्रोर्णवाथाँव्वृषावाजी रेतो धारेतो दधातु ॥ ३ ॥ ५

उत्सक्थ्या अवगुदन्धेहि समञ्जिश्चारयावृषन् ॥ यस्त्रीणाञ्जीं वभोजनः ॥ १ ॥

यका सकौशकुन्तिकाहलगिति वञ्चति ॥ आहन्ति गभेपसो निगल्गलीतिधा
रका ॥ २ ॥ यकौसकौ शकुन्तकआहलगिति वञ्चति ॥ विवक्षत इवते मुखमध्व
र्यो मानस्त्वमभिभाषथाः ॥ ३ ॥ माताचते पिताचतेऽग्रंवृक्षस्यरोहतः॥ प्रति
लामीतिते पिता गभे मुष्टिमतꣳसयत् ॥ ४ ॥ माताचते पिता चतेऽग्रे वृक्षस्य
क्रीळतः ॥ विवक्षत इवते मुखम्ब्रह्मन्मा त्वँव्वदो बहु ॥ ५ ॥ ऊर्ध्वामेनामु
च्छ्रापयगिरौ भारꣳ हरन्निव ॥ अथास्यै मध्यं मेधताꣳ शीते वाते पुनन्निव ॥ ६ ॥
ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारꣳ हरन्निव ॥ अथास्य मध्यमेजतु शीते वाते पुन
न्निव ॥ ७ ॥ यदस्या अꣳहुभेद्याः कृधुस्थूलमुपातसत् ॥ मुष्का इदस्या ए
जतो गोशफे शकुलाइव ॥ ८ ॥ यद्देवासो ललामं गुम्प्राविष्टीमिनमाविषुः ॥ स
क्थ्नादे दिश्यते नारी सत्यस्याक्षि भुवो यथा ॥ ९ ॥ यद्धरिणो यव मत्तिन

पुष्ट म्पशु मन्यते ॥ शूद्रा यदर्यं जारा नपोषाय धनायति ॥ १० ॥ यद्धरि
णो यव मत्तिन पुष्टम्बहु मन्यते ॥ शूद्रो यदर्यांयै जारो नपोष मनु मन्य
ते ॥ ११ ॥ दधि क्राव्णो अकारिषञ्जिष्णो रश्वस्य वाजिनः ॥ सुरभिनो मुखा
करत्प्रण आयूंषि तारिषत् ॥ १२ ॥ ६ ॥

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यासह ॥ बृहत्युष्णिहा ककुप्सूचीभिश्शम्य
न्तु त्वा ॥ १ ॥ द्विपदाया श्चतुष्पदा स्त्रिपदायाश्च षट्पदाः ॥ विच्छन्दायाश्च
सच्छन्दास्सूचीभिश्शम्यन्तु त्वा ॥ २ ॥ महानाम्न्योरेवत्यो विश्वा आशाः प्रभू
वरीः ॥ मैघीर्विद्युतो वाचस्सूचीभिश्शम्यन्तु त्वा ॥ ३ ॥ नार्यस्ते पत्न्यो लोम
विचिन्वन्तु मनीषया ॥ देवानाम्पत्न्यो दिशस्सूचीभिश्शम्यन्तु त्वा ॥ ४ ॥ रज
ता हरिणीस्सीसा युजोयुज्यन्ते कर्मभिः ॥ अश्वस्यवाजिनस्त्वचिसिमाश्शम्यन्तु

शम्यन्तीः ॥ ५ ॥ कुविदङ्गयवमन्तो यवञ्चिद्यथादान्त्यनुपूर्वंव्वियूय ॥ इहेहैषा ङ्कृणुहि भोजनानि ये बर्हिषो नमउक्तिन्न जग्मुः ॥ ६ ॥ ७

कस्त्वाच्छ्यतिकस्त्वा विशास्ति कस्ते गात्राणि शम्यति ॥ कउते शमिता कविः ॥ १ ॥ ऋतवस्त ऋतुथा पर्व शमितारो विशासतु ॥ सँव्वत्सरस्य ते जसा शमीभिश्शम्यन्तु त्वा ॥ २ ॥ अर्द्धमासाः परूँषि ते मासा आच्छ्यन्तु शम्यन्तः ॥ अहोरात्राणि मरुतो विलिष्टँ सूदयन्तुते ॥ ३ ॥ दैव्या अध्वर्य वस्त्वाच्छ्यन्तु विचशासतु ॥ गात्राणि पर्व शस्ते सिमाः कृण्वन्तु शम्यन्तीः ॥ ४ ॥ द्यौस्ते पृथिव्यन्तरिक्षँव्वायुश्छिद्रम्पृणातु ते ॥ सूर्यस्ते नक्षत्रैस्सह लोकङ्कृणोतु साधुया ॥ ५ ॥ शन्ते परेभ्यो गात्रेभ्यश्शमस्त्ववरेभ्यः ॥ शमस्थभ्यो मज्जभ्यश्शम्वस्तु तन्वै तव ॥ ६ ॥ ८ ॥

कास्स्वि देकाकी चरति कउस्विज्जायते पुनः ॥ किँ स्विद्धिमस्य भेषजाङ्किम्वा वपनम्महत् ॥ १ ॥ सूर्य एकाकी चरति चन्द्रमा जायते पुनः ॥ अग्निर्हिमस्य भेषजम्भूमिरावपनम्महत् ॥ २ ॥ किँ स्वित्सूर्य समञ्ज्योतिः किँ समुद्र समँ सरः ॥ किँ स्वित्पृथिव्यै वर्षीयः कस्य मात्रा नाविद्यते ॥ ३ ॥ ब्रह्म सूर्य समञ्ज्योति द्यौस्समुद्र समँ सरः ॥ इन्द्रःपृथिव्यै वर्षीयान्गोस्तु मात्रा नाविद्यते ॥४॥ पृच्छामि त्वाचितये देव सखय दि्त्वमत्र मनसा जगन्थ ॥ येषु विष्णु स्त्रिषुपदेष्वेष्टस्तेषु विश्वम्भुवन माविवेशा ॥ ५ ॥ अपि तेषु त्रिषुपदे ष्वस्मियेषु विश्वम्भुवनमाविवेश ॥ सद्यः पर्यैमि पृथिवी मुतद्या मेकेनाङ्गेन दिवो अस्य पृष्ठम् ॥ ६ ॥ केष्वन्तः पुरुष आविवेश कान्यन्तः पुरुषे अर्पितानि ॥ एतद् ब्रह्मन्नुप वह्लामसि त्वाकिँ स्विन्नः प्रतिवोचास्यत्र ॥ ७ ॥ पञ्चस्वन्तः पुरु

षआ विंवेशतान्यन्तः पुरुषे अर्पितानि ॥ एत त्वात्र प्रतिमन्वानो अस्मिन मायया भवस्युत्तरोमत् ॥ ८ ॥ ९ ॥

का स्विदासीत्पूर्वचित्तिः कि ँ स्विदासीद्बृहद्वयः ॥ का स्विदासीत्पिलिप्पिला कास्विदासीत्पिशङ्गिला ॥ १ ॥ द्यौरासीत्पूर्व चित्तिरश्व आसीद्बृहद्वयः ॥ अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ॥ २ ॥ का ईमरे पिशङ्गिला का ईङ्कुरु पिशङ्गिला ॥ क ईमास्कन्दं मर्षति क ईम्पन्थाँ व्विसर्पति ॥ ३ ॥ अजारे पिशङ्गिला श्वावित्कुरु पिशङ्गिला ॥ शश आस्कन्दं मर्षत्यहिः पन्थाँ व्विसर्पति ॥ ४ ॥ कत्यस्य विष्ठाः कत्यक्षराणि कति होमासः कतिधा समिद्धः ॥ यज्ञस्य त्वा विदथा पृच्छमत्र कति होतार ऋतुशो यजन्ति ॥ ५ ॥ षळस्य विष्ठाश्शतमक्षराण्यशीतिर्होमास्सामिधो ह तिस्रः ॥

यज्ञस्य ते विदथा प्रब्रवीमि सप्त होतार ऋतुशो यजन्ति ॥ ६ ॥ को अस्य
वेद भुवनस्य नाभिङ्को द्यावा पृथिवी अन्तरिक्षम् ॥ कस्सूर्यस्यवेदबृहतो ज
नित्रङ्को वेद चन्द्रमसँय्यतो जाः ॥ ७ ॥ वेदाहमस्य भुवनस्य नाभिँव्वेद
द्यावापृथिवी अन्तरिक्षम् ॥ वेद सूर्यस्य बृहतो जनित्रमथो वेद चन्द्रमसँय्य
तो जाः ॥ ८ ॥ पृच्छामि त्वा परमन्तम्पृथिव्याः पृच्छामि यत्र भुवनस्य
नाभिः ॥ पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमँव्योम ॥ ९ ॥
इयँव्वेदिः परो अन्तः पृथिव्या अयँय्यज्ञो भुवनस्य नाभिः ॥ अयꣳ सोमो
वृष्णो अश्वस्य रेतो ब्रह्मा यँव्वाचःपरमँव्योम ॥ १० ॥ सुभूस्स्वयम्भूः प्रथ
मोऽन्तर्महत्यर्णवे ॥ दधेह गर्भमृत्वियँय्यतो जातःप्रजापतिः ॥ ११ ॥ होता
यक्षत्प्रजापतिꣳ सोमस्य महिम्नः ॥ जुषताम्पिबतु सोमꣳ होतर्यज ॥ १२ ॥

प्रजापते नत्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव ॥ यत्कामास्ते जुहुम स्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥ १३ ॥ १० ॥ हरिःॐ

हिरण्यगर्भोद्वे ॥ २ ॥ यःप्राणतश्च ॥ २ ॥ युञ्जन्ति नव ॥ ९ ॥ वायुष्ट्वा षट् ॥ ६ ॥ प्राणाय तिस्रः ॥ ३ ॥ उत्सक्थ्या द्वादश ॥ १२ ॥ गायत्री षट् ॥६॥ कस्त्वाच ॥ ६ ॥ कस्स्विदष्ट ॥ ८ ॥ कास्वित्त्रयोदश ॥ १३ ॥ दशानुवाकेषु सप्तषष्टिः ॥ ६७ ॥ द्विपदाया महानाम्न्यो नार्यस्ते रजतास्तथा॥ कुविदंत्विहच ब्रूयाद्यथा क्रममनुस्मरन् ॥ १ ॥ इति शुक्लयजुर्वेद काण्वसंहिता पाठे पञ्चविंश त्यध्यायः ॥ हरिः ॐ

हरिःॐ॥ अश्वस्तूपरोगो मृगस्ते प्राजापत्याः कृष्णग्रीव आग्नेयोरराटे ॥ पुर स्तात्सारस्वती मेष्यधस्ताद्धन्वोः ॥ १ ॥ आश्विना अधोरामौ बाह्वोस्सौमा पौष्ण

श्श्यामोनाभ्याँ सौर्य्यामौ॥ श्वेतश्च कृष्णश्च पार्श्वयोः ॥ २ ॥ त्वाष्ट्रौ लोमशस
क्थौ सक्थ्योर्वायव्यः श्वेतःपुच्छ इन्द्राय स्वपस्याय वेहद्वैष्णवो वामनः ॥ रोहि
तोधूम्ररोहितः कर्कन्धुरोहितस्ते सौम्या बभ्ररुणबभ्रश्शुकबभ्रस्ते वारुणाः ॥३॥
शितिरन्ध्रोऽन्यतश्शितिरन्ध्रस्समन्त शितिरन्ध्रस्ते सावित्राश्शिति बाहुरन्यतश्शि
तिबाहुस्समन्ताशिति बाहुस्ते बार्हस्पत्याः ॥ पृषती क्षुद्रपृषतीस्थूलपृषतीतामै
त्रावरुण्यः ॥ ४ ॥ शुद्धवालस्सर्वशुद्ध वालोमणिवालस्त आश्विनाः ॥ श्येतश्श्ये
ताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णायामाः ॥ ५ ॥ अवलिप्ता रौद्रा नभोरूपाः
पार्जन्याः ॥ पृश्निस्तिरश्चीनं पृश्निरूर्ध्वपृश्निस्ते मारुताः ॥ ६ ॥ फल्गूलोहितोर्णी
पलक्षीतास्सारस्वत्यः ॥ प्लीहाकर्णश्शुण्ठा कर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः ॥ ७ ॥
कृष्णग्रीवश्शिति कक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः॥कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उ

षस्याः ॥ ८ ॥ शिल्पावैश्वदेव्यो रोहिण्य स्त्र्यवयो वाचे विज्ञाता अदित्यै ॥ सरूपाधात्रे वत्सतर्यौ देवानाम्पत्नीभ्यः ॥ ९ ॥ १

कृष्णग्रीवा आग्नेयाश्शितिभ्रवो वसूनाᳬ रोहिता रुद्राणाम् ॥ श्वेता अवरोकिण आदित्यानान्नभो रूपाः पार्जन्याः ॥ १ ॥ उन्नत ऋषभो वामनस्त ऐन्द्रा वैष्णवा उन्नतश्शिति बाहुश्शिति पृष्ठस्त ऐन्द्रा बार्हस्पत्याः ॥ शुकरूपा वाजिनाः कल्माषा आग्निमारुताश्श्यामाःपौष्णाः ॥ २ ॥ एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया वामना अनड्वाह आग्ना वैष्णवाः ॥ वशा मैत्रावरुण्योऽन्यत एन्यो मैत्र्यः ॥ ३ ॥ कृष्णग्रीवा आग्नेया बभ्रवस्सौम्याःश्वेतावायव्या अविज्ञाता अदित्यै ॥ सरूपा धात्रे वत्सतर्यौ देवानाम्पत्नीभ्यः ॥ ४ ॥ कृष्णा भौमाधूम्रा आन्तरिक्षा बृहन्तो दिव्याः ॥ शबलावै द्युतास्सिध्मास्तारकाः ॥ ५ ॥ २

धूम्रान्वसन्तायालभते श्वेतान्ग्रीष्माय कृष्णान्वर्षाभ्योऽरुणाञ्छरदे ॥ पृषतो
हेमन्ताय पिशङ्गाञ्छिशिराय ॥ १ ॥ त्र्यवयो गायत्र्यै पञ्चावयस्त्रिष्टुभे दित्यवाहो
जगत्यै ॥ त्रिवत्सा अनुष्टुभे तुर्यवाहउष्णिहे ॥ २ ॥ पष्ठवाहो विराज उक्षाणो
बृहत्या ऋषभाःककुभे ॥ अनड्वाहःपङ्क्त्यै धेनवोऽतिच्छन्दसे ॥ ३ ॥ कृष्ण
ग्रीवा आग्नेया बभ्रवस्सौम्या उपध्वस्तास्सावित्रा वत्सतर्यस्सारस्वत्यश्श्यामाःपौ
ष्णाः ॥ पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥ ४ ॥ उक्ता
स्संश्चरा एताऐन्द्राग्नाः ॥ कृष्णावारुणाः पृश्नयो मारुताः कायास्तूपराः ॥ ५ ॥३
अग्नयेऽनीकवते प्रथमजानालभते मरुद्भ्यस्सान्तपनेभ्यस्सवात्यान्मरुद्भ्यो
गृहमेधिभ्यो बष्किहान् ॥ मरुद्भ्यः क्रीळिभ्यस्संसृष्टान्मरुद्भ्यस्स्वतवद्भ्योऽ
नुसृष्टान् ॥ १ ॥ उक्तास्संश्चरा एता ऐन्द्राग्नाः ॥ प्राशृङ्गामाहेन्द्राबहुरूपा

वैश्वकर्मणाः ॥ २ ॥ धूम्रा बभ्रुनीकाशाः पितृणाꣳ सोमवताम्बभ्रवो धूम्रनी
काशाः पितृणाम्बर्हिषदाम् ॥ कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्ताना
ङ्कृष्णाःपृषन्तस्त्रैयम्बकाः ॥ ३ ॥ उक्तास्सञ्चरा एताश्शुनासीरीयाः ॥ श्वेता
वायव्याःश्वेतास्सौर्याः ॥ ४ ॥ वसन्तायकपिञ्जलानालभते ग्रीष्माय कलवि
ङ्कान्वर्षाभ्यस्तित्तिरीञ्छरदे वर्तिकाः ॥ हेमन्ताय ककराञ्छिशिराय विकक
रान् ॥ ५ ॥ ४ ॥

समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकानद्भ्यो मत्स्यान् ॥ मित्राय
कुलीपयान्वरुणाय नाक्रान् ॥ १ ॥ सोमाय हꣳसानालभते वायवे बलाका इन्द्रा
ग्निभ्याङ्क्रुञ्चान् ॥ मित्राय मद्गून्वरुणायचक्रवाकान् ॥ २ ॥ अग्नये कुटरूना
लभते वनस्पतिभ्य उलूकानग्नीषोमाभ्याञ्चाषान् ॥ अश्विभ्याम्मयूरान्मित्रा वरु

णाभ्याङ्कपोतान् ॥ ३ ॥ सोमाय लबानालभतेत्वष्ट्रे कौलीकान्गोषादीर्देवानाम्प
त्नीभ्यः ॥ कुलीका देवजामिभ्योऽग्नये गृहपतये पारुष्णान् ॥ ४ ॥ अह्नेपारा वता
नालभते रात्र्यैसीचापूरहोरात्रयोस्सन्धिभ्यो जतूः ॥ मासेभ्यो दात्यौहान्त्संव
त्सराय महतस्सुपर्णान् ॥ ५ ॥ ५

भूम्या आखूनालभतेऽन्तरिक्षाय पाङ्क्त्रान्दिवेकशान् ॥ दिग्भ्यो नकुलान्ब
भ्रुकानवान्तरदिशाभ्यः ॥ १ ॥ वसुभ्य ऋश्यानालभते रुद्रेभ्यो रुरूना
दित्येभ्योन्यङ्कून् ॥ विश्वेभ्यो देवेभ्यःपृषतान्त्साध्येभ्यःकुलुङ्गान् ॥ २ ॥
ईशानाय परस्वत आलभते मित्राय गौरान्वरुणाय महिषान् ॥ बृहस्पतये गव
याꣳ स्त्वष्टुउष्ट्रान् ॥ ३ ॥ प्रजापतये पुरुषान्हस्तिन आलभते वाचेप्लुषीन् ॥
चक्षुषे मशकाञ्छ्रोत्राय भृङ्गाः ॥ ४ ॥ प्रजापतयेच वायवे च गोमृगो वरुणा

आरण्यो मेषोयमाय कृष्णो मनुष्यराजाय मर्कटः ॥ शार्दूलाय रोहिद्दृषभाय गवयीक्षि प्रश्येनाय वर्तिकानीलङ्गोःक्रिमिस्समुद्राय शिशुमारो हिमवते हस्ती ॥ ५ ॥ ६

मयुःप्राजापत्य उलोहलिक्ष्णो वृषदंशस्ते धात्रे दिशाङ्कङ्को धुङ्क्षाग्नेयी ॥ कलविङ्को लोहिताहिःपुष्कर सादस्तेत्वाष्ट्रा वाचे क्रुञ्चः ॥ १ ॥ सोमाय कुलुङ्ग आरण्योऽजोनकुलश्शकाते पौष्णाः क्रोष्टा मायोरिन्द्रस्यगौरमृगः ॥ पिद्वोन्यङ्कुः कक्कटस्तेऽनुमत्यै प्रतिश्रुत्कायै चक्रवाकः ॥ २ ॥ सौरी बलाका शार्गस्सृजयश्शया ण्डकस्ते मैत्रास्सरस्वत्यै शारिःपुरुषवाक्श्वाविद्भौमी ॥ शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकःपुरुष वाक् ॥ ३ ॥ सुपर्णः पार्जन्य आतिर्वाहसोदर्विदाते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलजआन्तरिक्षः ॥ प्लवो मद्गुर्मत्स्यस्तेन

दीपतयै द्यावापृथिवी यंःकूर्मः ॥ ४ ॥ पुरुषमृगश्चन्द्रमसो गोधा कालकादार्वा घाटस्ते वनस्पतीनाङ्कृक वाकुंस्सावित्रो हꣳसोवातस्य ॥ नाक्रोमकरः कुलीपय स्ते कूपारस्य ह्रियैशल्यकः ॥ ५ ॥ ७

एण्यह्नो मण्डूको मूषिका तित्तिरिस्तेसर्पाणाँल्लोपाश आश्विनः कृष्णो राऽयै ॥ ऋक्षो जतूस्सुषिलीकात इतर जनानाअहे का वैष्णवी ॥ १ ॥ अन्य वापोऽर्ध मासानामृश्यो मयूर स्सुपर्णस्ते गन्धर्वाणामपामुद्रो मासाङ्कश्यपः ॥ रोहित्कुण्डृ णाची गोलत्ति कातेऽप्सरसाम्मृत्यवेऽसितः ॥ २ ॥ वर्षा हू ऋतूनामाखुः कशो मान्थालस्ते पितृणाम्बलाया जगरो वसूनाङ्कपिञ्जलः ॥ कपोत उलूकश्शशास्ते निर्ऋत्यै वरुणायारण्यो मेषः ॥ ३ ॥ श्वित्र आदित्यानामुष्ट्रो घृणीवान्वार्ध्रीन सस्ते मत्या अरण्याय सृमरोरुरू रौद्रः ॥ कयिः कुटरु दात्यौ हस्ते वाजिना

क्कामाय पिकः ॥ ४ ॥ खड्गो वैश्वदेवश्श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्ष
सा मिन्द्राय सूकरः ॥ सिꣳहो मारुतः कृकलासःपिप्पकाशकुनिस्ते शरव्यायै
विश्वेषान्देवानाम्पृषतः ॥ ५ ॥ ८ ॥ हरिःॐ

अश्वस्तू परो नव ॥ ९ ॥ कृष्ण ग्रीवाः पञ्च ॥ ५ ॥ धूम्रान्वसन्ताय ॥ ५ ॥
अग्नयेऽनीकवते ॥ ५ ॥ समुद्राय शिशुमारान् ॥ ५ ॥ भूम्याआखून् ॥५॥ मयुः
प्राजापत्यः॥५॥ एण्यह्वइतिच पञ्च पञ्च ॥५॥ अष्टानुवाकेषु चतुश्चत्वारिंशत् ॥४४॥
शितिभ्रवश्च श्वेतास्तूपध्वस्ता यथाक्रमम्॥ कृष्णस्तथाचप्राश्टृङ्गाः शुनासीरी वदे
द्बुधः ॥ १ ॥ इति शुक्लयजुर्वेद काण्व संहितापाठे षड्विंशत्यध्यायः हरिः ॐ

हरिःॐ॥ शादन्दद्भिरवं कान्दन्तमूलैर्मृदम्बस्वैस्ते गान्दꣳष्ट्राभ्याꣳ सरस्वत्या
अग्रजिह्वाञ्जिह्वायां उत्सादम्॥ अवक्रन्देन तालु वाजꣳ हनुभ्यामप आस्येन वृ

षणमाण्डाभ्याम् ॥ १ ॥ आदित्याञ्श्मश्रुभिः पन्थानम्भ्रूभ्यान्द्यावापृथिवी वर्त्तो
भ्याँविद्युतङ्कनीनकाभ्याम् ॥ शुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्य
वार्या इक्षवोऽवार्याणिपक्ष्माणिपार्या इक्षवः ॥ २ ॥ १

वातम्प्राणेनापानेन नासिके उपयाममधरेणौष्ठेन सदुत्तरेण ॥ प्रकाशेनान्तर
मनूकाशेन बाह्यन्निवेष्यम्मूर्ध्नास्तन यित्नुन्निर्बाधेनाशनिम्मस्तिष्केण विद्युतङ्कनी
नकाभ्याम् ॥ १ ॥ कर्णाभ्याᳬ श्रोत्रᳬ श्रोत्राभ्याङ्कर्णौ तेदनीमधरकण्ठेनापःशु
ष्ककण्ठेन चित्तम्मन्याभिः ॥ अदितिᳬ शीर्ष्णा निर्ऋतिन्निर्जर्ज्जल्येन शीर्ष्णासङ्
क्रोशैः प्राणान्रेष्माणᳬ स्तुपेन ॥ २ ॥ २

मशकान्केशैरिन्द्रᳬ स्वपसा वहेन बृहस्पतिᳬ शकुनि सादेन कूर्मान् ॥
शफैराक्रमणᳬ स्थूराभ्यामृक्षराभिःकपिञ्जलान् ॥ १ ॥ जवञ्जङ्घाभ्यामध्वानम्बा

ह्रुभ्याञ्जाम्बीलेनारण्यमग्निर्मतिरुग्भ्याम् ॥ पूषणन्दोर्भ्यामाश्विनाअँ् सांभ्याँ् रुद्रँ् रोराभ्याम् ॥२॥ ३

अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया पाञ्चतुर्थी ॥ अदित्यै पञ्चमी न्द्राण्यै षष्ठी मरुताँ् सप्तमी बृहस्पतेरष्टमी ॥ अर्यम्णो नवमी धातुर्दशमीन्द्र स्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी ॥ १ ॥ ४ ॥

इन्द्राग्नयोः पक्षतिस्सरस्वत्यै निपक्षतिर्मित्रस्य तृतीया सोमस्य चतुर्थी ॥ निर्ऋत्यै पञ्चम्यग्नीषोमयोः षष्ठी सर्पाणाँ् सप्तमी विष्णोरष्टमी ॥ पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यै त्रयोदशी ॥ द्यावापृथिव्योर्दक्षिणम्पार्श्वँविश्वेषान्देवाना मुत्तरम् ॥ १ ॥ ५ ॥

मरुताँ् स्कन्धा विश्वेषान्देवानाम्प्रथमा कीकसा रुद्राणान्द्वितीया दित्यानां

न्तृतीयांवायोः पुच्छं मग्नीषोमयो भसदौ ॥ क्रुञ्चौ श्रोणिभ्यामिन्द्राबृहस्पती
ऊरुभ्याम्मित्रावरुणा अल्गाभ्यामा क्रमणꣳ स्थूराभ्याम्बलङ्कुष्ठाभ्याम् ॥ १ ॥ ६

पूषणंव्वनिष्ठुनान्धाहीन्स्थूल गुदया सर्पान्गुदाभिर्विह्रुत आन्त्रैरपो व
स्तिना वृषणमाण्डाभ्याम् ॥ वाजिनꣳ शेपेन प्रजाꣳ रेतसा चाषान्पित्तेन प्रद
रान्पायुना कूश्माञ्छकपिण्डैः ॥ १ ॥ ७ ॥

इन्द्रस्य क्रोळोऽदित्यै पाजस्यन्दिशाञ्जत्रवोऽदित्यै भसत् ॥ जीमूतान्हृद
यौपशेनान्तरिक्षम्पुरी तता ॥ १ ॥ नभ उदर्येण चक्रवाकौ मतस्नाभ्यान्दिवं
व्वृक्काभ्याङ्गिरीन्प्लाशिभिः ॥ उपलान्प्लीह्ना वल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हि
राभिस्स्रवन्तीः ॥ हृदान्कुक्षिभ्याꣳ समुद्रमुदरेण वैश्वानरम्भस्मना ॥ २ ॥ ८

विधृतिन्नाभ्या घृतꣳ रसेनापो यूष्णामरीचीर्विप्रुड्भिर्नीहारमूष्मणा शीनंव्वसं

याप्रष्वाअश्रुभिः ॥ ह्रादुनीर्दूषीकाभिरस्ना रक्षाᳫँसि चित्राण्यङ्गैर्नक्षत्राणि रूपेण
पृथिवीन्त्वचा जुम्बकाय स्वाहा ॥ १ ॥ ९

हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ॥ सदाधार पृथि
वीन्द्यामुते माङ्कस्मै देवाय हविषा विधेम ॥ १ ॥ यः प्राणतो निमिषतो महित्वै
क इद्राजा जगतो बभूव ॥ य ईशेअस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा
विधेम ॥ २ ॥ यस्येमे हिमवन्तो महित्वा यस्य समुद्रᳫँ रसया सहाहुः ॥ यस्ये
माः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ३ ॥ यआत्मदाबलदाय
स्य विश्वे उपासते प्रशिषँय्यस्य देवाः ॥ यस्य च्छायामृतँय्यस्य मृत्युः कस्मै
देवाय हविषा विधेम ॥ ४ ॥ १०

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीता स उद्भिदः ॥ देवा

नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ १ ॥ देवानाम्भद्रा
सुमति ऋजूयतान्देवानाꣳ रातिरभि नो निवर्त्तताम् ॥ देवानाꣳ सख्यमुप से
दिमा वयन्देवा न आयुः प्रतिरन्तु जीवसे ॥ २ ॥ तान्पूर्व्वया निविदा हूमहे
वयम्भगम्मित्रमदितिन्दक्षं मस्त्रिधम् ॥ अर्य्यमणँ व्वरुणꣳ सोमंमश्विना सर
स्वती नस्सुभगा मयस्करत् ॥ ३ ॥ तन्नो वातो मयोभुवातु भेषजन्तन्माता
पृथिवी तत्पिताद्यौः ॥ तद्ग्रावाणस्सोमसुतो मयो भुवस्तदश्विना शृणुतन्धि
ष्ण्या युवम् ॥ ४ ॥ तमीशा नञ्जग तस्तस्थुषस्पतिं न्धियञ्जिन्वमवसे हूमहे व
यम् ॥ पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धस्स्वस्तये ॥ ५ ॥
स्वस्तिन इन्द्रो वृद्धश्रवास्स्वस्तिनः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरि
ष्टनेमिस्स्वस्तिनो बृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभँय्या

वांनो विदथेषु जग्मयः ॥ अग्नि जिह्वा मनवस्सूरं चक्षसो विश्वेनो देवा अव
सागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिः शृणुयामदेवा भद्रम्पश्येमाक्षभिर्यजत्राः ॥
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितँय्यदायुः ॥ ८ ॥ शत मिन्नु
शरदो अन्ति देवा यत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासो यत्र पितरो
भवन्ति मानो मध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदिति
र्माता स पिता स पुत्रः ॥ विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदिति
र्जनित्वम् ॥ १० ॥ ११

मानो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परिख्यन् ॥ यद्वाजिनो
देव जातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥ १ ॥ यन्निर्णिजा रेक्णसा प्रा
वृतस्य रातिङ्गृभीताम्मुखतो नयन्ति ॥ सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः

प्रियमप्येति पाथः ॥ २ ॥ एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागोनी
यते विश्वदेव्यः ॥ अभिप्रियँय्यत्पुरोळाशमर्वतात्वष्टे देनꣳ सौश्रवसाय जिन्व
ति ॥ ३ ॥ यद्धविष्यमृतुशो देवयानन्त्रिर्मानुषाः पर्यश्वन्नयन्ति ॥ अत्रापूष्णः
प्रथमो भाग एति यज्ञन्देवेभ्यः प्रतिवेदयन्नजः ॥ ४ ॥ होताध्वर्युरावया अ
ग्निमिन्धो ग्रावग्राभ उतशꣳस्ता सुविप्रः ॥ तेन यज्ञेन स्वरङ्कृतेन स्विष्टेन वक्ष
णा आपृणध्वम् ॥ ५ ॥ यूपव्रस्काउत ये यूपवाहाश्चषालँय्ये अश्वयूपाय तक्ष
ति ॥ ये चार्वते पचनꣳ सम्भरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥ ६ ॥ उप प्रा
गात्सुमन्मेधायि मन्म देवानामाशा उप वीतपृष्ठः ॥ अन्वेनँविप्रा ऋषयोम
दन्ति देवानाम्पुष्टे चकृमा सुबन्धुम् ॥ ७ ॥ यद्वाजिनो दाम सन्दानमर्वतो
या शीर्षण्या रशना रज्जुरस्य ॥ यद्वाघास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते

अपि देवेष्वस्तु ॥८॥ १२

यदश्वस्य क्रविषो मक्षिकाशयद्वा स्वरौस्वधितौ रिप्तमस्ति ॥ यद्धस्तयोश्श
मितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥ १ ॥ यदूवध्यमुदरस्यापवातिय आ
मस्य क्रविषो गन्धो अस्ति ॥ सुकृता तच्छमितारः कृण्वन्तूतमेधꣳ शृतपाकम्प
चन्तु ॥ २ ॥ यत्ते गात्रादग्निना पच्यमानादभि शूलन्निहतस्यावधावति ॥ मा
तद्भूम्यामाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥३॥ ये वाजिनम्परिप
श्यन्ति पक्वँय्य ईमाहुस्सुरभिर्निर्हरेति ॥ ये चार्वतो माꣳसभिक्षामुपासत उतो
तेषामभि गूर्तिर्न इन्वतु ॥ ४ ॥ यन्नीक्षणम्माꣳस्पचन्या उखाया या पात्राणि
यूष्ण आसेचनानि ॥ ऊष्मण्यापिधाना चरूणामङ्कास्सूनाः परिभूषन्त्यश्वम् ॥५॥
मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः ॥ इष्टँवीतमभिगूर्तं

ठ्वषट्कृतन्तन्देवासः प्रतिं गृभ्णन्त्यश्वम् ॥ ६ ॥ निक्रमणन्निषदनँठ्विवर्तनँय्य
च्च पड्वीशमर्वतः ॥ यच्चपपौ यच्चं घासिञ्जघास सर्वा ता ते अपिदेवे
ष्वस्तु ॥ ७ ॥ १३

यदश्वाय वासं उपस्तृणन्त्यधीवासँय्याहिरण्यान्यस्मै ॥ सन्दानमर्वन्तम्प
ड्वीशम्प्रिया देवेष्वायामयान्ति ॥ १ ॥ १४ ॥

इमानु कम्भुवनासीषधामेन्द्रश्च विश्वेच देवाः ॥ आदित्यैरिन्द्रस्सगणो म
रुद्भिरस्मभ्यम्भेषजा करत् ॥ यज्ञञ्च नस्तन्वञ्च प्रजाञ्चादित्यैरिन्द्रस्सह सीष
धाति ॥ १ ॥ अग्ने त्वन्नो अन्तम उत त्राता शिवोभवावरूथ्यः ॥ वसुरग्नि
र्वसुश्रवा अच्छानक्षिद्युमत्तमँ रयिन्दाः ॥ तन्त्वा शोचिष्ठ दीदिवस्सुम्नाय नू
नमीमहे सखिभ्यः ॥ २ ॥ १५ ॥ हरिःॐ

शादन्दद्भिर्द्वे ॥ २ ॥ वातम्प्राणेन ॥ २ ॥ मशकान्केशैरितिचद्वेद्वे ॥ २ ॥ अग्नेः पक्षतिरेका ॥ १ ॥ इन्द्राग्न्योःपक्षतिः ॥१॥ मरुताᳬंस्कन्धाः ॥१॥ पूषणँव्वनिष्ठुने त्येकैका ॥ १ ॥ इन्द्रस्यक्रोळोद्वे ॥२॥ विधृतिमेका ॥१॥ हिरण्यगर्भश्चतस्रः ॥४॥ आनोदश ॥ १० ॥ मानोऽष्ट ॥ ८ ॥ यदश्वस्यसप्त ॥ ७ ॥ यदश्वायैका ॥ १ ॥ इमानुकन्द्वे ॥ २ ॥ पञ्चदशानुवाकेषु पञ्चचत्वारिᳬंशत् ॥४५॥ इतिशुक्लयजुर्वेद काण्वसँहितापाठे सप्तविंशतितमोऽध्यायः ॥हरिःॐ ॥

हरिःॐ ॥ अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चान्तरिक्षञ्च सन्नते ते मे सन्नमतामद आदित्यश्च द्यौश्च सन्नते ते मे सन्नमतामद आपश्च वरुणश्च सन्नते ते मे सन्नमतामदः ॥ सप्त सᳬंसदो अष्टमी भूतसाधनी ॥१॥ सकामाँ२अध्वनस्कुरु संज्ञानमस्तु मेऽमुना ॥ यथेमाँव्वाचङ्कल्याणीमावदानि

जनेभ्यः ॥ २ ॥ ब्रह्मराजन्याभ्याᳫं शूद्राय चार्याय च स्वाय चारणाय च ॥ प्रियो देवानान्दक्षिणायै दातुरिह भूयासमयम्मे कामस्समृध्यता मुप मादो न मतु ॥ ३ ॥ १

बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणन्धेहिचित्रम् ॥ उपयामगृहीतोऽसि बृहस्पतयेत्वैष ते योनिर्बृहस्पतये त्वा ॥ १ ॥ २

इन्द्र गोमन्निहायाहि पिबा सोमᳫं शतक्रतो ॥ विद्यद्भिर्ग्रावभिस्सुतम् ॥ उपयामगृहीतोऽसीन्द्राय त्वा गोमत एष ते योनिरिन्द्राय त्वा गोमते ॥ १ ॥ ३

ऋतावानँवैश्वानरमृतस्य ज्योतिषस्पतिम् ॥ अजस्रङ्घर्ममीमहे ॥ उपयाम गृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥ १ ॥ ४

वैश्वानरꣳ हवामह ऋतस्य ज्योतिषस्पतिम् ॥ अजस्रङ्घर्ममीमहे ॥ उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥ १ ॥ ५

वैश्वानरो न ऊतय आप्रयातु परावतः ॥ अग्निरुक्थेन वाहसा ॥ उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥ १ ॥ ६

वैश्वानरस्य सुमतौ स्याम राजा हि कम्भुवनानामभिश्रीः ॥ इतो जातो विश्वमिदँव्विचष्टे वैश्वानरो यतते सूर्येण ॥ उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥ १ ॥ ७

मरुत्वाँ२इन्द्र वृषभो रणाय पिबा सोमं मनुष्वधम्मदाय ॥ आसिञ्चस्व जठरे मध्व ऊर्मिन्त्वꣳ राजासि प्रतिपत्सुतानाम् ॥ उपयामगृहीतोऽसीन्द्रायत्वा मरुत्वंत एषते योनिरिन्द्रायत्वा मरुत्वंते ॥ १ ॥ ८

महाँ२इन्द्रो वज्रहस्तःषोळशी शर्मयच्छतु ॥ हन्तु पाप्मानँय्योऽस्मान्द्वेष्टि ॥
उपयामगृहीतोऽसीन्द्रायत्वा षोळशिनं एषते योनिरिन्द्रायत्वा षोळशिने ॥१॥ ९

अग्निर्ऋषिः पवमानःपाञ्चजन्यः पुरोहितः ॥ तमीमहे महागयम् ॥१॥ १०

अनु वीरैरनु पुष्यास्म गोभि रन्वश्वैरनु सर्वेण पुष्टैः ॥ अनु द्विपदानु चतु
ष्पदा वयन्देवा नो यज्ञमृतु थानयन्तु ॥ १ ॥ ११

आनो गोत्रा दर्द्दहि गोपते गास्समस्मभ्यँ सनयो यन्तु वाजाः ॥ दिव
क्षा असि वृषभ सत्यशुष्मोऽस्मभ्यँ सुमघवन्बोधि गोदाः ॥ १ ॥१२॥ हरिःॐ॥

अग्निश्चतिस्त्रः ॥३॥ बृहस्पतएका ॥ १ ॥ इन्द्रगोमन् ॥१॥ ऋतावानम् ॥ १॥
वैश्वानरम् ॥ १ ॥ वैश्वानरः ॥ १ ॥ वैश्वानरस्यसुमतौ ॥१॥ मरुत्वाँ२इन्द्रः ॥१॥
महाँ२इन्द्रः ॥ १ ॥ अग्निर्ऋषिः ॥ १ ॥ अनुवीरैः ॥१॥ आनोगोत्राइत्येकैका ॥१॥

द्वादशानुवाकेषु चतुर्दश ॥१४॥ इतिशुक्लयजुर्वेदकाण्वसँहितापाठेअष्टविंशतितमोऽध्यायः ॥ हरिःॐ ॥

हरिःॐ ॥ समा स्त्वाग्न ऋतवो वर्धयन्तुसँव्वत्सरा ऋषयो यानि सत्या ॥ सन्दिव्व्येनदीदिहि रोचनेन विश्वा आभाहि प्रदिशश्चतस्रः ॥१॥ सञ्चेध्यस्वाग्ने प्रचबोधयैनमुच्चतिष्ठ महते सौभगाय ॥ माच रिषदुपसत्तातेऽअग्ने ब्रह्माणस्ते यशसस्सन्तु मान्ये ॥ २ ॥ त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने सँव्वरणे भवा नः ॥ सपत्नहानो अभिमातिजिच्चस्वे गये जागृह्यप्रयुच्छन् ॥ ३ ॥ इहैवाग्ने अधि धारया रयिम्मात्वा निक्रन्पूर्वचितो निकारिणः ॥ क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतान्ते अनिष्टृतः ॥ ४ ॥ क्षत्रेणाग्ने स्वायुस्सँरभस्व मित्रेणाग्ने मित्रधेयेयतस्व ॥ सजातानाम्मध्यमस्था एधि राज्ञामग्ने विहव्व्यो दीदिहीह ॥५॥

अति निहो अति स्त्रिधोऽत्यचित्तिमत्यरातिमग्ने ॥ विश्वाह्यग्ने दुरिता सहस्वाथा
स्मभ्यꣳ सहवीरꣳ रयिन्दाः ॥ ६ ॥ अनाधृष्यो जातवेदा अनिष्टृतो विराळग्ने
क्षत्रभृद्दीदिहीह ॥ विश्वा आशाः प्रमुञ्चन्मानुषीर्भियश्शिवाभिरद्य परिपाहिनो
वृधे ॥ ७ ॥ बृहस्पते सवितर्बोधयैनꣳ सꣳशितञ्चित्सन्तराꣳ सꣳशिशाधि ॥
वर्धयैनम्महते सौभगाय विश्वे एनमनुमदन्तु देवाः ॥ ८ ॥ अमुत्रभूयादथय
द्यमस्य बृहस्पते अभिशस्तेरमुञ्चः ॥ प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने
भिषजा शचीभिः ॥ ९ ॥ उद्वयन्तमसस्परिस्वःपश्यन्त उत्तरम् ॥ देवन्देव
त्रा सूर्यमगन्मज्योतिरुत्तमम् ॥ १० ॥ १

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्राशोचीꣳष्यग्नेः ॥ द्युमत्तमा सुप्रतीकस्य
सूनोः ॥ १ ॥ तनूनपादसुरो विश्ववेदा देवो देवेषु देवः ॥ पथो अनक्त मध्वा

घृतेन ॥ २ ॥ मध्वा यज्ञन्नक्षसे प्रीणानो नराशꣳसो अग्ने ॥ सुकृद्देवस्सविता
विश्ववारः ॥ ३ ॥ अच्छायमेति शवसा घृतेनेळानो वह्निर्नमसा ॥ अग्निꣳ स्रुचो
अध्वरेषु प्रयत्सु ॥ ४ ॥ स यक्षदस्य महिमानमग्नेस्सईम्मन्द्रा सुप्रयसः ॥ वसु
श्चेतिष्ठो वसुधातमश्च ॥ ५ ॥ द्वारोदेवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः ॥ उरु
व्यचसो धाम्ना पत्यमानाः ॥ ६ ॥ ते अस्य योषणे दिव्ये नयोना उषासा
नक्ता ॥ इमँय्यज्ञमवतामध्वरन्नः ॥ ७ ॥ दैव्या होतारा ऊर्ध्वमध्वरन्नोऽग्नेर्जिह्वा
माभि गृणीतम् ॥ कृणु तन्नस्स्विष्टिम् ॥ ८ ॥ तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विळा
सरस्वती भारती ॥ महीगृणाना ॥ ९ ॥ तन्नस्तुरीपमद्भुतम्पुरुक्षु त्वष्टा सुवीर
म् ॥ रायस्पोषँव्विष्यतु नाभिमस्मे ॥ १० ॥ वनस्पतेऽवसृजा रराणस्त्मना देवेषु ॥
अग्निर्हव्यꣳ शमिता सूदयाति ॥ ११ ॥ अग्ने स्वाहा कृणुहि जातवेद इन्द्राय ह

व्यम् ॥ विश्वेदेवा हविरिदञ्जुषन्ताम् ॥ १२ ॥ २

पीवो अन्नारयि वृधस्सुमेधाः श्वेतास्सिषक्ति नियुतामभिश्रीः ॥ ते वायवे
समनसो वितस्थुर्विश्वेन्नरस्स्वपत्यानिचक्रुः ॥ १ ॥ राये नु यञ्जज्ञतूरोदसी
मेराये देवी धिषणा धाति देवम् ॥ अध वायुन्नियुतस्सश्चत स्वा उतश्वेतंव
सु धितिन्निरेके ॥ २ ॥ वायुरग्रे गा यज्ञप्रीस्साकङ्गन्मनसा यज्ञम् ॥ शिवो
नियुद्भिश्शिवाभिः ॥ ३ ॥ प्रयाभिर्यासि दाश्वाꣳसमच्छा नियुद्भिर्वाय इष्टये
दुरोणे ॥ निनो रयिꣳ सु भोजसँय्युवस्व निवीरङ्गव्यमश्व्यञ्चराधः ॥४॥ वायो
ये ते सहस्रिणो रथासस्तेभिरागहि ॥ नियुत्वान्त्सोमपीतये ॥ ५ ॥ एक
याच दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशती च ॥ तिसृभिश्च वहसे त्रिꣳ
शताचनियुद्भिर्वाय इहताविमुञ्च ॥ ६ ॥ नियुत्वान्वाय आगह्ययꣳ शुक्रो

अयामि ते ॥ गन्तासि सुन्वतो गृहम् ॥ ७ ॥ वायो शुक्रो अयामिते मध्वो अग्रन्दिविष्टिषु ॥ आयाहि सोमपीतये स्पार्हो देव नियुत्वता॥८॥ आ नो नियुद्भिश्शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ॥ वायो अस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिस्सदा नः ॥ ९ ॥ तव वायवृतस्पते त्वष्टुर्जामातरद्भुत ॥ अवाꣳस्यावृणीमहे ॥ १० ॥ ३

हिरण्य गर्भ इत्येषः ॥ ये नद्यौरुग्रा पृथिवीच दृह्ळा येन स्वस्तभितꣳ ये न नाकः ॥ यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ १ ॥ यङ्क्रन्दसी अवसा तस्तभाने अभ्यैक्षेताम्मनसा रेजमाने ॥ यत्राधिसूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ २ ॥ आपो ह यद्बृहतीर्विश्वमायन्गर्भन्दधाना जनयन्तीरग्निम् ॥ ततो देवानाꣳ समवर्तता सुरेकः कस्मै देवा

य हविषा विधेम ॥ ३ ॥ यश्चिदापो महिना पर्यपश्यद्दक्षन्दधाना जनयन्तीर्य ज्ञम् ॥ यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥ मानो हिꣳसीज्जनिता यः पृथिव्या यो वादिवꣳ सत्यधर्मा जजान ॥ यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ प्रजापते नत्वदेतान्यन्यो विश्वा जातानि परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नो अस्तुवयꣳ स्यामपतयो र यीणाम् ॥ ४ ॥ ४

अग्न आयूꣳषि पवस आसुवोर्जमिषञ्चनः ॥ आरेबाधस्व दुच्छुनाम् ॥१॥ अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् ॥ दधद्रयिम्मायिपोषम् ॥ २ ॥ अग्नि र्ऋषिःपवमानः पाञ्चजन्यः पुरोहितः ॥ तमीमहे महागयम् ॥ ३ ॥ अभित्वा शूरनोनुमोऽदुग्धा इव धेनवः ॥ ईशानमस्य जगतस्स्वर्दृशमीशानमिन्द्र तस्थु

षः ॥ ४ ॥ नत्वावाँ२अन्यो दिव्योन पार्थिवोन जातोन जनिष्यते ॥ अश्वा
यन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ ५ ॥ त्वामिद्धि हवामहे
सातौ वाजस्य कारवः ॥ त्वाँव्वृत्रेष्विन्द्र सत्पतिन्नरस्त्वाङ्काष्ठास्ववर्वतः ॥ ६ ॥
सत्वन्नश्चित्र वज्रहस्त धृष्णुया महस्तवानो अद्रिवः ॥ गामश्वँ रथ्यमिन्द्र स
ङ्किर सत्रावाजन्न जिग्युषे ॥ ७ ॥ कया नश्चित्र आभुवदूती सदावृधस्सखा ॥
कया शचिष्ठया वृता ॥ ८ ॥ कस्त्वा सत्यो मदानाम्मँहिष्ठो मत्सदन्धसः ॥
दृह्ळाचिदारु जेवसु ॥ ९ ॥ अभीषुणस्सखीनामविता जरितॄणाम् ॥ शतम्भ
वास्यूतये ॥ १० ॥ यज्ञायज्ञावो अग्नये गिरा गिरा चदक्षसे ॥ प्रप्रवयममृ
तञ्जातवेदसम्प्रियम्मित्रन्नशँसिषम् ॥ ११ ॥ ऊर्जो नपातँसहिना यमस्म
युर्दाशेम हव्यदातये ॥ भुवद्वाजेष्वविता भुवद्वृध उतत्राता तनूनाम् ॥ १२ ॥ ५

सँव्वत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि ॥ उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्धमासास्ते कल्पन्ताम्मासास्ते कल्पन्तामृतवस्ते कल्पन्ताᳬं सँव्वत्सरस्ते कल्पताम् ॥ १ ॥ प्रेत्या एत्यै सञ्चाञ्च प्रचसारय ॥ सुपर्णचिदसि तया देवतयाङ्गिरस्वद्ध्रुवस्सीद ॥ २ ॥ ६ ॥ हरिःॐ

समास्त्वा दश ॥ १० ॥ ऊर्ध्वा द्वादश ॥ १२ ॥ पीवो अन्नादश ॥ १० ॥ हिरण्यगर्भश्चतस्रः ॥ ४ ॥ अग्नआयूᳬंषिद्वादश ॥ १२ ॥ सँव्वत्सरोद्वे ॥ २ ॥ षडनुवाकेषु पञ्चाशत् ॥ ५० ॥ इषेदेवस्य समाःपञ्चाशत् ॥ इति शुक्लयजुर्वेद काण्व संहितापाठे एकोनत्रिंशतितमोऽध्यायः ॥ हरिः ॐ ॥

हरिःॐ॥होतायक्षत्समिधेन्द्रमिळस्पदे नाभा पृथिव्या अधि ॥ दिवो वर्ष्मन्त्समिध्यत ओजिष्ठश्चर्षणी सहाँ व्वे त्वाज्यस्य होतर्यज ॥ १ ॥ होतायक्ष

त्तनूनपातमूतिभिर्जेतारमपं राजितम् ॥ इन्द्रन्देवꣳ स्वर्विदम्पथिभिर्मधुमत्त
मैर्नराशꣳसेन तेजसा वे त्वाज्यस्य होतर्यज ॥२॥ होतायक्षदिळाभिरिन्द्रमीळितमा
जुह्वानममर्त्यम् ॥ देवो देवैस्सवीर्यो वज्रहस्तः पुरन्दरो वे त्वाज्यस्य होतर्यज ॥३॥
होता यक्षद्बर्हिषीन्द्रन्निषद्वरव्वृषभन्नर्यापसम् ॥ वसुभी रुद्रैरादित्यैस्सयु
ग्भिर्बर्हिरासदद्वे त्वाज्यस्य होतर्यज ॥ ४ ॥ होता यक्षदोजोन वीर्यꣳ सहो द्वार
इन्द्रमवर्धयन् ॥ सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो द्वार इन्द्राय मीढ्ढु
षे व्यन्त्वाज्यस्य होतर्यज ॥ ५ ॥ होता यक्षदुषे इन्द्रस्य धेनू सुदुघे मातरा
मही ॥ स वातरौ न तेजसा वत्समिन्द्रमवर्धताँव्वीतामाज्यस्य होतर्यज ॥ ६ ॥
होतायक्षद्दैव्या होतारा भिषजा सखा या हविषेन्द्रम्भिषज्यतः ॥ कवी
देवौ प्रचेतसा इन्द्राय धत्त इन्द्रियँव्वीतामाज्यस्य होतर्यज ॥ ७ ॥ होता यक्ष

त्तिस्रो देवी र्न भेषजन्त्वयं त्रिधातवोपस इळा सरस्वती भारती महीः ॥ इन्द्र
पत्नीर्हविष्मतीर्व्यन्त्वाज्यस्य होतर्यज ॥ ८ ॥ होता यक्षत्त्वष्टारमिन्द्रन्देव
म्भिषजꣳ सुयजङ्घृत श्रियम् ॥ पुरु रूपꣳ सुरेतसम्मघोन मिन्द्राय त्वष्टा द
धदिन्द्रियाणि वे त्वाज्यस्य होतर्यज ॥ ९ ॥ होता यक्षद्वनस्पतिꣳ शमितारꣳ
शतक्रतुन्धियो जोष्टारमिन्द्रियम् ॥ मध्वा समञ्जन्पथिभिस्सुगेभिस्स्वदाति य
ज्ञम्मधुना घृतेन वे त्वाज्यस्य होतर्यज ॥ १० ॥ होता यक्षदिन्द्रꣳ स्वाहाज्य
स्य स्वाहा मेदसस्स्वाहा स्तोकानाꣳ स्वाहा स्वाहा कृतीनाꣳ स्वाहा हव्यसूक्ती
नाम् ॥ स्वाहा देवा आज्यपाजुषाणा इन्द्र आज्यस्य व्यन्तु होतर्यज ॥ ११ ॥ १

देवम्बर्हिरिन्द्रꣳ सुदेवन्देवैर्वीरवत्स्तीर्णव्वेद्यामवर्धयत् ॥ वस्तो र्वृतम्प्राक्तो
र्भृतꣳराया बर्हिष्मतोऽत्यगाद्वसु वने वसुधेयस्य वेतुयज ॥ १ ॥ देवीर्द्वार इन्द्रꣳ

सवाते वीड्वीर्यामिन्द्रवर्धयन् ॥ आवत्सेन तरुणेन कुमारेणं च मीवता पार्वाणꣳ रेणुकंकाटन्नुदन्तॉंव्वसुवने वसुधेयस्य व्यन्तु यजं ॥ २ ॥ देवी उषासा नक्ते न्द्रैव्यज्ञे प्रयत्यंह्वताम् ॥ दैवीर्विशः प्रायांसिष्टाꣳ सुप्रीते सुधिते वसुवने वसुधे यस्य वीतॉंय्यजं ॥ ३ ॥ देवी जोष्ट्री वसुधिती देवमिन्द्रमवर्धताम् ॥ अयाव्य न्याघा द्वेषाꣳस्यान्यावंक्षद्वसु वार्याणि यजमानाय शिक्षिते वंसुवने वसुधेयस्य वीतॉंय्यजं ॥ ४ ॥ देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रमवर्धताम् ॥ इषमूर्जमन्या वंक्षत्सग्धिꣳ सपीतिमन्या नवेन पूर्वन्दयमाने पुराणेन नवमधातामूर्जमूर्जाहुती ऊर्जयमाने वसुवार्याणि यजमानाय शिक्षिते वंसुवने वसुधेयस्य वीतॉंय्यजं ॥५॥ देवा दैव्या होतारा देवमिन्द्रमवर्धताम् ॥ हताघशꣳसा आभार्ष्टांव्वसुवार्याणि यजमानाय शिक्षितो वंसुवने वसुधेयस्य वीतॉंय्यजं ॥ ६ ॥ देवी स्तिस्रास्तिस्रो

देवीः पतिमिन्द्रमवर्धयन् ॥ अस्पृक्षद्द्वारती दिवꣳ रुद्रैर्यज्ञꣳ सरस्वतीळा वसुम
ती गृहान्वसुवने वसुधेयस्य व्यन्तु यज ॥ ७ ॥ देवइन्द्रो नराशꣳसस्त्रि वरूथ
स्त्रिबन्धुरो देवमिन्द्रमवर्धयत् ॥ शतेन शितिपृष्ठानामाहितस्सहस्रेण प्रवर्तते मित्रा
वरुणेदस्यहोत्रमर्हतोबृहस्पतिस्तोत्रमाश्विनाध्वर्यवँवसुवने वसुधेयस्यवेतुयज ॥८॥
देवो देवैर्वनस्पतिर्हिरण्यपर्णो मधुशाखस्सुपिप्पलोदेवमिन्द्रमवर्धयत् ॥ दिवम
ग्रेणास्पृक्षदान्तरिक्षम्पृथिवीमदृꣳहीद्वसुवने वसुधेयस्य वेतुयज ॥ ९ ॥ देवम्ब
र्हिर्वारितीनान्देवमिन्द्रमवर्धयत् ॥ स्वासस्थमिन्द्रेणासन्नमन्या बर्हीꣳष्यभ्यभू
द्वसुवने वसुधेयस्य वेतु यज ॥ १० ॥ देवो अग्निस्स्विष्टकृद्देवमिन्द्रमवर्धयत् ॥
स्विष्टङ्कुर्वन्स्विष्टकृत्स्विष्टमद्य करोतुनो वसुवने वसुधेयस्य वेतु यज ॥ ११ ॥
अग्निमद्य होतारमवृणीतायँयजमानः पचन्पक्तीः पचन्पुरोळाशम्बध्नन्निन्द्रायच्छा

गम् ॥ सूपस्था अद्य देवो वनस्पतिरभवदिन्द्रायच्छागेन ॥ अघत्तम्मेदस्तः
प्रति पचताग्रभीदवीवृधत पुरोळाशेन ॥ त्वामद्यऋषे ॥ १२ ॥ २

होता यक्षत्समिधानम्महद्यशस्सुसमिद्धँवरेण्यमग्निमिन्द्रँव्वयो धसम् ॥
गायत्रीञ्छन्द इन्द्रियन्त्र्यविङ्गाँव्वयो दधद्वेत्वाज्यस्य होतर्यज ॥ १ ॥ होताय
क्षत्तनूनपातमुद्भिदँय्यङ्गर्भमदितिर्दधे शुचिमिन्द्रँव्वयोधसम् ॥ उष्णिहञ्छन्द
इन्द्रियन्दित्यवाहङ्गाँव्वयो दधद्वेत्वाज्यस्य होतर्यज ॥ २ ॥ होता यक्षदीळेन्य
मीळितँव्वृत्रहन्तमामिळाभिरीड्यꣳ सहस्सोममिन्द्रँव्वयो धसम् ॥ अनुष्टुभञ्छ
न्द इन्द्रियम्पञ्चाविङ्गाँव्वयो दधद्वेत्वाज्यस्य होतर्यज ॥ ३ ॥ होता यक्षत्सुब
र्हिषम्पूषण्वन्तममर्त्यꣳ सीदन्तम्बर्हिषि प्रियेऽमृतेन्द्रँव्वयोधसम् ॥ बृहतीञ्छ
न्द इन्द्रियन्त्रिवत्सङ्गाँव्वयो दधद्वे त्वाज्यस्य होतर्यज ॥ ४ ॥ होता यक्षद्व्य

चस्वतीस्सुप्रायणा ऋता वृधो द्वारो देवीर्हिरण्ययीर्ब्रह्माणमिन्द्रँ्वयोधसम् ॥ प
ङ्क्तिञ्छन्दइहेन्द्रियन्तुर्यवाहङ्गाँव्वयोदधद्व्यन्त्वाज्यस्य होतर्यज ॥ ५ ॥ होता
यक्षत्सुपेशसा सुशिल्पे बृहती उभेनक्तोषासान दर्शते विश्वामिन्द्रँ्वयोधसम् ॥
त्रिष्टुभञ्छन्द इहेन्द्रियम्पष्ठ वाहङ्गाँव्वयो दधद्वीतामाज्यस्य होतर्यज ॥ ६ ॥
होता यक्षत्प्रचेतसा देवानामुत्तमँय्यशो होतारा दैव्या कवी सयुजेन्द्रँ्वयोधसं
म् ॥ जगतीञ्छन्द इन्द्रियमनड्वाहङ्गाँव्वयो दधद्वीतामाज्यस्य होतर्यज ॥ ७ ॥
होता यक्षत्पेशस्वतीस्तिस्रोदेवीर्हिरण्ययीर्भारतीर्बृहतीर्महीःपतिमिन्द्रँ्वयोधसम् ॥
विराजञ्छन्द इहेन्द्रियन्धेनुङ्गान्नवयो दधद्व्यन्त्वाज्यस्य होतर्यज ॥ ८ ॥ होता
यक्षत्सुरेतसन्त्वष्टारम्पुष्टिवर्धनꣳ रूपाणि बिभ्रतम्पृथक्पुष्टिमिन्द्रँ्वयोधसम् ॥
द्विपदञ्छन्द इन्द्रियमुक्षाणङ्गान्नवयो दधद्वे त्वाज्यस्य होतर्यज ॥ ९ ॥

होतायक्षद्वनस्पतिँ शमितारँ शतक्रतुँ हिरण्यपर्णमुक्थिनँ रशनाम्बि
भ्रतँवशिम्भगमिन्द्रँव्वयोधसम् ॥ ककुभञ्छन्द इहेन्द्रियँव्वशाँव्वेहतङ्गाँव्वयो
दधद्वेत्वाज्यस्य होतर्यज ॥ १० ॥ होतायक्षत्स्वाहा कृतीरग्निङ्गृहपतिम्पृथग्वरु
णम्भेषजङ्कविङ्क्षत्रमिन्द्रँव्वयोधसम् ॥अतिच्छन्दसञ्छन्द इन्द्रियम्बृहदृषभङ्गाँ
व्वयोदधद्व्यन्त्वाज्यस्य होतर्यज ॥ ११ ॥ ३

देवम्बर्हिर्वयो धसन्देवमिन्द्रमवर्धयत् ॥ गायत्र्या च्छन्दसेन्द्रियञ्चक्षुरिन्द्रे
वयो दधद्वसुवने वसुधेयस्यवेतु यज ॥ १ ॥ देवीर्द्वारो वयोधसँ शुचिमिन्द्र
मवर्धयन् ॥ उष्णिहाच्छन्दसेन्द्रियम्प्राणमिन्द्रे वयो दधद्वसुवनेवसु धेयस्य व्य
न्तु यज ॥ २ ॥ देवी उषासा नक्ता देवमिन्द्रँव्वयो धसन्देवी देवमवर्धताम् ॥
अनुष्टुभाच्छन्दसेन्द्रियम्बलमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीताँय्यज ॥ ३ ॥

देवी जोष्ट्री वसुधिती देवमिन्द्रँ्वयोधसन्देवी देवमवर्धताम् ॥ बृहत्या च्छन्द
सेन्द्रियꣳश्रोत्रमिन्द्रेवयो दधद्वसुवने वसुधेयस्य वीताँय्यज ॥ ४ ॥ देवी ऊर्जा
हुती दुघे सुदुघे पयसेन्द्रँ्वयो धसन्देवी देवमवर्धताम् ॥ पङ्क्त्या च्छन्दसे
न्द्रियꣳ शुक्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीताँय्यज ॥ ५ ॥ देवा दैव्या
होतारा देवमिन्द्रँ्वयो धसन्देवौ देवमवर्धताम् ॥ त्रिष्टुभाच्छन्दसेन्द्रियन्त्वि
षिमिन्द्रे वयो दधद्वसुवने वसु धेयस्यवीताँय्यज ॥ ६ ॥ देवीस्तिस्रस्तिस्रो देवी
र्वयो धसस्पतिमिन्द्रमवर्धयन् ॥ जगत्या च्छन्दसेन्द्रियꣳ शूषमिन्द्रे वयो दध
द्वसुवने वसुधेयस्य व्यन्तु यज ॥ ७ ॥ देवो नराशꣳसो देवमिन्द्रँ्वयो धस
न्देवो देवमवर्धयत् ॥ विराजा च्छन्दसेन्द्रियꣳ रूपमिन्द्रे वयो दधद्वसुवने व
सुधेयस्य वेतु यज ॥ ८ ॥ देवो वनस्पतिर्देवमिन्द्रँ्वयो धसन्देवो देवमवर्ध

यत् ॥ द्विपदा च्छन्दसेन्द्रियम्भगमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु
यज ॥ ९ ॥ देवम्बर्हिर्वारितीनान्देवमिन्द्रँव्वयो धसन्देवन्देवमवर्धयत् ॥
ककुभा च्छन्दसेन्द्रियँय्यश इन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ १० ॥
देवो अग्निस्स्विष्टकृद्देवमिन्द्रँव्वयो धसन्देवो देवमवर्धयत् ॥ अतिच्छन्दसा
च्छन्दसेन्द्रियङ्क्षत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ ११ ॥
अग्निमद्य होतारमवृणीतायँय्यजमानः पचन्पक्तीः पचन्पुरोळाशम्बध्नन्निन्द्राय
वयो धसे छागम् ॥ सूपस्था अद्यदेवो वनस्पतिरभवदिन्द्राय वयो धसे छागेन ॥
अघत्तम्मेदस्तःप्रति पचताग्रभीदवी वृधतपुरोळाशेन ॥ त्वामद्य ऋषे ॥ १२ ॥
४॥हरिः ॐ ॥

होतायक्षदेकादश ॥ ११ ॥ देवम्बर्हिर्द्वादश ॥ १२ ॥ होतायक्षदेकादश ॥११॥

देवम्बर्हिर्द्वादश ॥ १२ ॥ चतुरनुवाकेषु षट्चत्वारिंशत् ॥ ४६ ॥ प्राणाय
वाजस्य होतायज्जग्रतः षट्चत्वारिंशत् ॥ कारिकांतु प्रवक्ष्यामि जनानां हितका
म्यया ॥ आदावेतांच स्मृत्वाथ ब्रूयाद्येनं क्रमाद्बुधः ॥ १ ॥ होतायक्षत्समी दैवत
नूनपातमूतिभिः ॥ इळाभिर्बर्हिर्षीन्द्रश्चचतुर्णावेतु विद्यते॥२॥ओजोव्यन्तुद्युषे दै
व्यानयोर्वीतां वदेत्सदा ॥ तिस्रो व्यन्तुच त्वष्टारं वनस्पतिंवेतु कथ्यते ॥ २ ॥
इंद्रव्यंत्वितिचब्रूयादनुवाकेप्रथमे तथा ॥ अर्धर्चाद्द्वितीयेतु वक्ष्यते प्रथमंपदम्॥४॥
देवंबर्हिर्वस्तोर्वेतु देवीर्द्वारावत्सयोस्तथा ॥ व्यंत्वाथ देवी उषासा नक्तादेवीर्विश
स्ततः ॥ ५ ॥ देवीजोष्ट्र्यथ चायावीदेवीऊर्जाहुतीतथा ॥ इषमूर्जं चापिदेवा दै
व्याहताघशं सदा ॥६॥ चतुर्वीतामितिज्ञेयं देवीस्तिस्रोऽस्पृक्षदिह॥ देव इन्द्रश्श
तेनाथ देवोदेवैर्दिवंतथा ॥ ७ ॥ देवंबर्हिश्च स्वासस्थं देवोऽग्निस्विष्टकृत्तथा ॥ स्वि

ष्टकुर्वंश्च पंचानामेतासां वेतुसर्वदा ॥ ८ ॥ अग्निमद्य सुपस्थाश्चाघ
त्वामद्ययथाक्रमम् ॥ तृतीयेतु प्रवक्ष्यामि पुनरर्द्धर्चशःक्रमात् ॥ ९ ॥
होतायक्षत्समीहैव गायत्रींस॒यवींततः ॥ तनूनपातमुष्णीहं दित्यवाहं यथाक्रमम्
॥ १० ॥ ईळेन्यंचानुष्टुभंतुसुपंचावीं सुबर्हिषम् ॥ बृहती वित्सांमध्येतु उक्त्वा वेतु
चतुस्त्रषु ॥ ११ ॥ व्यचस्वतीं पंक्तिंचाथ तुर्यवाहंच व्यंतुहि ॥ सुपेशसा त्रिष्टुभंच
पष्ठवाहसमंतथा ॥ १२ ॥ प्रचेतसाचजगतीमनड्वाहं तदुत्तरम् ॥ द्वयोर्वीतां चाधि
गम्य पेशस्वतीश्चसर्वदा ॥ १३ ॥ विराजव्यंतु धेनुंहि सुरेतसमथापिच ॥ द्विपदं
बोध्यमुक्षाणं वनस्पतिं ककुभंवशाम् ॥ १४ ॥ तयोस्तु वेत्विहब्रूयात्स्वाहा कृतीर्य
थाक्रमम् ॥ व्यंत्वातिच्छन्दसंपूर्वमेवं ज्ञेयं तृतीयके ॥ १५ ॥ पुनरन्यं प्रवक्षामि
ह्यनुवाकं चतुर्थकम् ॥ देवं बर्हिश्च गाय॒या चक्षुर्वेतु सदाबुधः ॥ १६ ॥ देवीर्द्वा

रस्तूष्णिहाच प्राणंव्यंतु वदेत्क्रमम् ॥ देव्युषासानुष्टुभाच बलंवीतां वदेत्स
दा ॥ १७ ॥ देवी जोष्ट्रीबृहत्याथश्रोत्रंवीतांच कथ्यते ॥ देवीऊर्जाहुती पंक्त्या
शुक्रंवीतां क्रमेणतु ॥ १८ ॥ देवादैव्याश्च वीतांतु त्रिष्टुभाथ त्विषीहतु ॥ देवी
स्तिस्रःपतिं व्यंतु जगत्याशूषमुत्तरे ॥ १९ ॥ देवो नराशंवेत्वाथविराजारूपमित्य
पि ॥ देवो वनस्पतिर्वेतु द्विपदांचभगंस्मृतम् ॥ २० ॥ देवंबर्हिश्च ककुभा यशो
वेति क्रमेणच ॥ देवोऽग्निरतिच्छन्दसाक्षत्रं वेतुनित्यशः ॥ २१ ॥ अग्निमद्यसुप
स्थाश्चाघत्तात्त्वामृच एवहि ॥ एवं विंशतिमेऽध्यायेऽनुवाकेषु चतुस्त्रषु ॥ २२ ॥
यःस्मरेत्कारिकांप्रेक्ष्यवारंवारं बुधोयदा ॥ सनरो निश्चलोभूत्वा वक्तुं शक्नोतिसर्व
दा ॥ ॥ इति शुक्लयजुर्वेद काण्व संहितापाठे विंशतिमोऽध्यायः ॥ हरिः ॐ

हरिःॐ ॥ समिद्धो अञ्जन्कृदरम्मतीनाङ्घृतमग्ने मधुमत्पिन्वमानः ॥ वाजी व
हन्वाजिनञ्जातवेदो देवानाँव्वक्षि प्रियमा सधस्थम् ॥ १ ॥ घृतेनाञ्जन्त्सम्पथो
देवयानान्प्रजानन्वाज्यप्येतु देवान् ॥ अनु त्वा सप्तेप्रदिशस्सचन्ताᳬ स्वधामस्मै
यजमानाय धेहि ॥ २ ॥ ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते ॥
अग्निष्ट्वा देवैर्वसुभिस्सजोषाःप्रीतँव्वह्निव्वहतु जातवेदाः ॥ ३ ॥ स्तीर्णम्बर्हिस्सुष्टु
रीमा जुषाणोरु पृथुप्रथमानम्पृथिव्याम् ॥ देवेभिर्युक्तमदितिस्सजोषास्स्योनङ्कृ
ण्वाना सुविते दधातु ॥ ४ ॥ एता उवस्सुभगा विश्वरूपा विपक्षोभिश्श्रय
माणा उदातैः ॥ ऋष्वास्सतीः कवषश्शुम्भमाना द्वारोदेवीस्सुप्रायणा भव
न्तु ॥ ५ ॥ अन्तरा मित्रावरुणा चरन्ती मुखँय्यज्ञानामभि सँव्विदाने ॥ उ
पासा वाᳬसुहिरण्येसुशिल्पे ऋतस्य योना इह सादयामि ॥ ६ ॥ प्रथमा वाᳬ

सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा ॥ अपिप्रियश्चोदनात्वाम्मिमा
ना होतारा ज्योतिः प्रदिशा दिशन्ता ॥ ७ ॥ आदित्यै नो भारती वष्टु यज्ञꣳ
सरस्वती सह रुद्रैर्न आवीत् ॥ इळोपहूता वसुभिस्सजोषा यज्ञन्नो देवीरमृते
षु धत्त ॥ ८ ॥ त्वष्टा वीरन्देवकामञ्जजान त्वष्टुरर्वा जायत आशुरश्वः ॥
त्वष्टेदꣳ विश्वम्भुवनञ्जजान बहोः कर्तारमिह यक्षिहोत : ॥ ९ ॥ अश्वो घृते
न त्मन्यासमक्त उप देवाँ३ऋतुशः पाथ एतु ॥ वनस्पतिर्देवलोकम्प्रजानन्नग्नि
नाहव्या स्वदितानि वक्षत् ॥ १० ॥ प्रजापतेस्तपसा वावृधानस्सद्यो जातो दधि
षे यज्ञमग्ने ॥ स्वाहा कृतेन हविषापुरोगा याहिसाध्या हविरदन्तुदेवाः ॥११॥ १
केतुङ्कृण्वन्नकेतवे पेशो मर्या अपेशसे ॥ समुषद्भिरजायथाः ॥ १ ॥ जीमूत
स्येव भवति प्रतीकँय्यद्वर्मी याति समदामुपस्थे ॥ अनाविद्धया तन्वा जयत्वꣳ

सत्वा वर्मणो महिमापिं पर्तु ॥ २ ॥ धन्वंना गा धन्वंनाजिञ्जयेम धन्वंना तीव्रा
स्समदों जयेम ॥ धनुश्शत्रोरपकामङ्कृणोति धन्वंना सर्वाः प्रदिशों जयेम ॥३॥
ते आचरंन्ती समंनेव योषा मातेवं पुत्रम्बिभृतामुपस्थे ॥ अप शत्रून्विध्यताँ
सँविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥ ४ ॥ वक्ष्यन्ती वेदागंनीगन्ति
कर्णम्प्रियँ सखायम्परिषस्वजाना ॥ योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इ
यँ समंने पारयंन्ती ॥ ५ ॥ अहिंरिव भोगैः पर्यैति बाहुञ्ज्याया हेतिम्परिबा
धमानः ॥ हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाँ सम्परिंपातु विश्वतः ॥६॥
बह्वीनाम्पिता बहुरंस्य पुत्रश्चिश्चाकृणोति समंनावगत्यं ॥ इषुधिस्सङ्काःपृतनाश्च
सर्वाः पृष्ठे निनंद्धो जयति प्रसूतः ॥ ७ ॥ सुपर्णंव्वस्तेमृगो अंस्या दन्तो गो
भिस्सन्नंद्धा पतति प्रसूता ॥ यत्रानरस्सश्च विच द्रवन्ति तत्रास्मभ्यमिषवश्शर्म

मेयꣳसन् ॥ ८ ॥ वनस्पते वीड्वङ्गोहि भूया अस्मत्सखा प्रतरणस्सुवीरः ॥ गो
भिस्सन्नद्धो असिवीळयस्वास्थातातेꣳ जयतु जेत्वानि ॥ ९ ॥ रथे तिष्ठन्नयति वा
जिनः पुरो यत्रयत्र कामयते सुषारथिः ॥ अभी शूनाम्महिमानम्पनायत मनः प
श्चादनु यच्छन्ति रश्मयः ॥ १० ॥ आजङ्घन्ति सान्वेषाञ्जघनाँ२उपजिघ्नते ॥ अ
श्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥ ११ ॥ उपश्वासय पृथिवीमुतद्याम्पुरु
त्रातेꣳ मनुताँ्विष्ठितञ्जगत् ॥ सदुन्दुभे सजूरिन्द्रेणदेवैर्दूराद्दवीयोअपसेधशत्रू
न् ॥ १२ ॥ २

यदक्रन्दः प्रथमञ्जायमान उद्यन्त्समुद्रादुतवा पुरीषात् ॥ श्येनस्य पक्षा
हरिणस्य बाहू उपस्तुत्यम्महि जातन्तेꣳ अर्वन् ॥ १ ॥ यमेन दत्तन्त्रितएनमा
युनगिन्द्र एणम्प्रथमो अध्यतिष्ठत् ॥ गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं

ऽवसवो निरतष्ट ॥ २ ॥ आसि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रते
न ॥ असि सोमेन समया विपृक्त आहुस्ते त्रीणिदिवि बन्धनानि ॥ ३ ॥
त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सुत्रीण्यन्तस्समुद्रे ॥ उतेवमे वरुणश्छ
न्त्स्यर्वन्यत्रा त आहुः परमञ्जनित्रम् ॥ ४ ॥ इमा ते वाजिन्नव मार्जनानीमा
शफानां॒ सनितुर्निधाना ॥ अत्रा ते भद्रा रशना अपश्यमृतस्ययया अभिरक्ष
न्ति गोपाः ॥ ५ ॥ आत्मानन्ते मनसारादजानामवो दिवा पतयन्तम्पतङ्गम् ॥
शिरो अपश्यम्पाथिभिस्सुगेभिररेणुभिर्जेहमानम्पतात्रि ॥ ६ ॥ अत्रा ते रूपमुत्त
ममपश्याञ्जिगीषमाणमिष आ पदे गोः ॥ यदा ते मर्तो अनु भोगमानळा
दिद्ग्रसिष्ठ ओषधीरजीगः ॥ ७ ॥ अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽ
नुभगः कनीनाम् ॥ अनु व्राता सस्तव सख्यमीयुरनुदेवा ममिरे वीर्यन्ते ॥ ८ ॥

हिरण्यशृङ्गोऽयो अस्य पादा मनो जवा अवर इन्द्र आसीत् ॥ देवा इदस्य
हविरद्यमायन्यो अर्वन्तम्प्रथमो अध्यतिष्ठत् ॥ ९ ॥ ईर्मान्तासः सिलिकमध्य
मासस्सꣳशूरणासो दिव्यासो अत्याः ॥ हꣳसा इव श्रेणिशो यतन्ते यदाक्षि
षुर्दिव्यमज्ममश्वाः ॥ १० ॥ तव शरीरम्पतयिष्णर्व्वन्तव चित्तँव्वात इव ध्र
जीमान् ॥ तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणाचरन्ति ॥ ११ ॥ उप
प्रागाच्छसनँव्वाज्यर्वा देवद्रीचा मनसा दीध्यानः ॥ अजः पुरो नीयते नाभिर
स्यानु पश्चात्कवयो यन्तिरेभाः ॥ १२ ॥ उप प्रागात्परमँय्यत्सधस्थमर्वाँ२अ
च्छा पितरम्मातरञ्च ॥ अद्या देवाञ्जुष्टतमो हि गम्या अथाशास्ते दाशुषे
वार्य्याणि ॥ १३ ॥ ३ ॥

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ॥ आच वह मित्र

महाँश्चिकित्वान्त्वन्दूतः कविरसि प्रचेताः ॥ १ ॥ तनूनपात्पथ ऋतस्य यानान्म
ध्वा समञ्जन्त्स्वदयासुजिह्व ॥ मन्मानि धीभिरुत यज्ञमृन्धन्देवत्राचकृणुह्यध्वर
न्नः ॥ २ ॥ नराशꣳसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ॥ ये सुक्र
तवश्शुचयो धियन्धास्स्वदन्तिदेवा उभयानि हव्या ॥ ३ ॥ आजुह्वान ईड्यो
वन्द्यश्चाया ह्यग्ने वसुभिस्सजोषाः ॥ त्वन्देवानामसि यह्व होता स एनान्यक्षी
षितो यजीयान् ॥ ४ ॥ प्राचीनम्बर्हिः प्रदिशा पृथिव्या वस्तो रस्या वृज्यते
अग्रे अह्नाम् ॥ व्युप्रथते वितरँव्वरीयो देवेभ्यो अदितये स्योनम् ॥ ५ ॥
व्यचस्वतीरुर्विया विश्रयन्ताम्पतिभ्यो नजनयश्शुम्भमानाः ॥ देवीर्द्वारो बृह
तीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥ ६ ॥ आसुष्वयन्ती यजते उपाके
उषासानक्ता सदतान्नियोनौ ॥ दिव्ये योषणे बृहती सुरुक्मे अधिश्रियꣳशुक्र

पिशन्दधाने ॥ ७ ॥ दैव्या होतारा प्रथमा सुवाचामिमाना यज्ञम्मनुषो यज
ध्यै ॥ प्रचोदयन्ता विदथेषु कारूप्राचीनञ्ज्योतिः प्रदिशा दिशन्ता ॥ ८ ॥
आनो यज्ञम्भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ॥ तिस्रो देवीर्ब
र्हिरेदꣳ स्योनꣳ सरस्वती स्वपसस्सदन्तु ॥ ९ ॥ यइमे द्यावापृथिवी
जनित्री रूपैरपिꣳ शद्भुवनानि विश्वा ॥ तमद्य होतरिषितो यजीयान्दे
वन्त्वष्टारमिह यांक्षिविद्वान् ॥ १० ॥ उपावसृज त्मन्या समञ्जन्देवा
नाम्पाथ ऋतुथा हवीꣳषि ॥ वनस्पतिश्शमिता देवो अग्निस्स्वदन्तु हव्यम्मधु
ना घृतेन ॥ ११ ॥ सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः ॥ अ
स्यहोतुः प्रदिश्यृतस्यवाचिस्वाहा कृतꣳहविरदन्तुदेवाः ॥ १२ ॥ ४

अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशायबा

हैतायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो द्वाद
शकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्याँवैराजाभ्याम् ॥ पयस्या
बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरुस्सवित्र औष्णिहाय त्रयस्त्रिꣳशाय
रैवताय द्वादशकपालःप्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वा
दशकपालोऽनुमत्या अष्टाकपालः ॥ १ ॥ ५

आग्नेयःकृष्णग्रीवस्सारस्वती मेषी बभ्रुस्सौम्यः पौष्णश्श्यामः शितिपृष्ठो बार्ह
स्पत्यःशिल्पोवैश्वदेवः ॥ ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नस्सꣳहितोऽधोरा
मस्सावित्रो वारुणः कृष्ण एकशितिपात्पेत्वः ॥ १ ॥ ६

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरा मौसावित्रौ पौष्णौरजतनाभी वैश्व
देवौ पिशङ्गौतूपरौ ॥ मारुतः कल्माष आग्नेयः कृष्णोऽजस्सारस्वतीमेषीवारुणः

पेत्वः ॥ १ ॥ ७ ॥ हरिःॐ ॥

समिद्धोअञ्जन्नेकादश ॥ ११ ॥ केतुङ्कृण्वन्द्वादश ॥ १२ ॥ यदक्रन्दस्त्रयोदश ॥ १३ ॥ समिद्धोअद्यद्वादश ॥ १२ ॥ अग्नयेगायत्राय ॥ १ ॥ आग्नेयःकृष्णग्रीवः ॥ १ ॥ अग्नयेऽनीकवतइत्येकैका ॥ १ ॥ सप्तानुवाकेष्वेकपञ्चाशत् ॥ ५१ ॥

इतिशुक्लयजुर्वेदकाण्वसँहितापाठेएकत्रिंशतिमोऽध्यायः ॥ हरिःॐ ॥

हरिःॐ ॥ अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयःपावकाः ॥ श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो नसोमाः ॥ १ ॥ हरयो धूमकेतवो वातजूता उपद्यवि॥यतन्ते वृथगग्नयः ॥ २ ॥ यजानो मित्रावरुणा यजा देवाँ२ ऋतम्बृहत् ॥ अग्ने यक्षि स्वन्दमम् ॥ ३ ॥ युक्ष्वाहि देवहूतमाँ२अश्वाँ२अग्ने रथीरिव ॥ निहोता पूर्व्यस्सदः ॥ ४ ॥ द्वे विरूपे चरतस्स्वर्थे अन्यान्या वत्समुपधा

पयेते ॥ हरिरन्यस्याम्भवति स्वधावाञ्छुक्रो अन्यस्यान्ददृशे सुवर्चाः ॥ ५ ॥ अ
यमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ॥ यमप्नवानो भृगवो
विरुरुचुर्वनेषु चित्रँविभ्वँविशेविशे ॥ ६ ॥ त्रीणि शतात्रीसहस्राण्यग्निन्त्रिँ श
च्चदेवा नवचासपर्यन् ॥ औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारन्न्य सादय
न्त ॥ ७ ॥ मूर्धानन्दिवो अरतिम्पृथिव्या वैश्वानरमृत आजातमग्निम् ॥ कविँ
सम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः ॥ ८ ॥ अग्निर्वृत्राणि जङ्घनद्
द्रविणस्युर्विपन्यया ॥ समिद्धःशुक्रआहुतः ॥ ९ ॥ विश्वेभिस्सोम्यम्मध्वग्न इन्द्रे
ण वायुना ॥ पिबा मित्रस्य धामभिः ॥ १० ॥ आयदिषे नृपतिन्तेजआनट्शु
चिरेतो निषिक्तन्द्यौरभीके ॥ अग्निश्शर्धमनवद्यँय्युवानँ स्वाध्यञ्जनयत्सूदय
च्च ॥ ११ ॥ अग्ने शर्धमहते सौभगाय तवद्युम्नान्युत्तमानि सन्तु ॥ सञ्जास्पत्यँ

सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाꣳसि ॥ १२ ॥ त्वाꣳ हिमन्द्रतममर्कशो
कैर्ववृमहे महिनःश्रोष्यग्ने ॥ इन्द्रन्नत्वा शवसा देवता वायुम्पृणन्ति राधसानृत
माः ॥ १३ ॥ त्वेअग्ने स्वाहुत प्रियासस्सन्तु सूरयः ॥ यन्ता रोये मघवानो ज
नाना मूर्वान्दयन्त गोनाम् ॥ १४ ॥ श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्नेसयावभिः ॥
आसीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥ १५ ॥ विश्वेषामदि
तिर्यज्ञियानाँ्विश्वेषामतिथिर्मानुषाणाम् ॥ अग्निर्देवानामव आवृणानस्सुमृळी
को भवतु जातवेदाः ॥ १६ ॥ महो अग्नेस्समिधानस्य शर्मण्यनागा मित्रे वरुणे
स्वस्तये ॥ श्रेष्ठेस्याम सवितुस्सवीमनि तद्देवानामवो अद्यावृणीमहे ॥ १७ ॥ १

आपश्चित्पिप्युस्तर्यो न गावो नक्षन्नृतञ्जरिता रस्त इन्द्र ॥ याहि वायुर्न नि
युतो नो अच्छात्वꣳ हिधीभिर्दयसे विवाजान् ॥ १ ॥ गाव उपावतावतम्मही य

ज्ञस्यंरप्सुदा ॥ उभाकर्णा हिरण्यया ॥ २ ॥ यदद्य सूर उदितेऽनागा मित्रो अर्य
मा ॥ सुवातिसविता भगः ॥ ३ ॥ आसुते सिञ्चत श्रियꣳ रोदस्योरभिश्रियम् ॥
रसादधीत वृषभम् ॥ तम्प्रत्नथायँव्वेनश्चोदयत् ॥ ४ ॥ आतिष्ठन्तम्परि विश्वे अ
भूषञ्छ्रियो वसानश्चरति स्वरोचिः ॥ महत्तद्वृष्णो असुरस्य नामाविश्वरूपो अमृ
तानि तस्थौ ॥ ५ ॥ प्रवो महे मन्दमानायान्धसोऽर्चाविश्वानराय विश्वाभुवे ॥
इन्द्रस्य यस्य सुमखꣳ सहोमहिश्रवो नृम्णञ्चरोदसी सपर्यतः ॥ ६ ॥ बृहन्निदि
ध्मएषाम्भूरि शस्तम्पृथुस्वरुः ॥ येषामिन्द्रो युवासखा ॥ ७ ॥ इन्द्रेहि मत्स्यन्ध
सोविश्वेभिस्सोमपर्वभिः ॥ महाँ२ अभिष्टिरोजसा ॥ ८ ॥ इन्द्रोवृत्रमवृणोच्छर्द्धनी
तिःप्रमायिनाममिनाद्वर्पणीतिः ॥ अहन्व्यꣳ समुशधग्वनेष्वाविर्धेना अकृणोद्रा
म्याणाम् ॥ ९ ॥ कुतस्त्वमिन्द्रमाहिनस्सन्नेको यासि सत्पते किन्तइत्था ॥ सम्पृ

च्छसे समराणःशुभानैर्वौचेस्तन्नो हरिवो यत्तेअस्मे ॥ महाँ२इन्द्रोय ओजसा क
द्राचनस्तरीरसि कदाचन प्रयुच्छसि ॥ १० ॥ आतत्त इन्द्रा यर्वःपनन्ताभिय ऊ
र्वङ्गोमन्तन्तितृत्सान् ॥ सकृत्स्वँय्ये पुरुपुत्राम्महीँ सहस्त्रधाराम्बृहतीन्दुदुक्ष
न् ॥ ११ ॥ इमान्ते धियम्प्रभरे महो महीमस्य स्तोत्रे धिषणा यत्तआनजे ॥
तमुत्सवेच्च प्रसवेच्च सासहिमिन्द्रन्देवासश्शवसामदन्ननु ॥ १२ ॥ २

विभ्राड्बृहत्पिबतु सोम्यम्मध्वायुर्दधद्यज्ञपता अविह्रुतम् ॥ वातजूतो यो अ
भिरक्षतित्मना प्रजाःपुपोष पुरुधा विराजति ॥ १ ॥ उदुत्यञ्जातवेदसन्देवँव्वह
न्ति केतवः ॥ दृशे विश्वाय सूर्यम् ॥ २ ॥ येना पावक चक्षसा भुरण्यन्तञ्ज
नाँ२अनु ॥ त्वँव्वरुण पश्यसि ॥ ३ ॥ दैव्या अध्वर्यू आगतँ रथेन सूर्यत्वचा॥
मध्वा यज्ञँ समञ्जाथे ॥ तम्प्रत्नथायँव्वेनश्चोदयाच्चित्रन्देवानाम् ॥ ४ ॥ आन

इळाभिर्विदथेसुशस्ति विश्वानरस्सविता देव एतु ॥ अपियथा युवानो मत्संथा
नो विश्वञ्जगदभि पित्वे मनीषा ॥ ५ ॥ यदद्य कच्चंवृत्रहन्नुदगाअभि सूर्य ॥
सर्वन्तदिन्द्र तेवशे ॥ ६ ॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ॥ विश्वमा
भासि रोचनम् ॥ ७ ॥ तत्सूर्यस्य देवत्वन्तन्महित्वम्मध्या कर्तोर्विततꣳसञ्जभा
र ॥ यदेदयुक्त हरितस्सधस्थादाद्रात्रीवासस्तनुते सिमस्मै ॥ ८ ॥ तन्मित्रस्य
वरुणस्याभिचक्षे सूर्यो रूपङ्कृणुते द्योरुपस्थे ॥ अनन्तमन्यद्रुशदस्य पाजः कृ
ष्णमन्यद्धरितस्सम्भरन्ति ॥ ९ ॥ बण्महाँ२असि सूर्यबळादित्य महाँ२असि ॥
महस्ते सतो महिमा पनस्यतेऽद्धादेव महाँ२असि ॥ १० ॥ बट्सूर्य श्रवसा म
हाँ२असि सत्रा देव महाँ२असि ॥ मह्ना देवानामसुर्यः पुरोहितो विभुज्योतिर
दाभ्यम् ॥ ११ ॥ श्रायन्त इव सूर्यंविश्वेदिन्द्रस्य भक्षत ॥ वसूनि जाते जने

मान ओजसा प्रतिभागन्नदीधिम ॥ १२ ॥ अद्या देवा उदिता सूर्यस्य निरꣳहे
सः पिपृता निरवद्यात् ॥ तन्नो मित्रो वरुणो मामहन्तामदितिस्सिन्धुः पृथिवी
उतद्यौः ॥ १३ ॥ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्य
येन सविता रथेना देवो याति भुवनानि पश्यन् ॥ १४ ॥ ३

प्रवावृजे सुप्रया बर्हिरेषामा विश्पतीवबीरिट इयाते ॥ विशामक्तोरुषसः पूर्व
हूतौ वायुः पूषास्वस्तये नियुत्वान् ॥१॥ इन्द्रवायू बृहस्पतिम्मित्राग्निम्पूषणम्भ
गम् ॥ आदित्यान्मारुतङ्गणम् ॥२॥ वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः ॥
करतान्नस्सुराधसः ॥ ३ ॥ अधिन इन्द्रैषाँ विष्णो सजात्यानाम् ॥ इतामरुतोअ
श्विना ॥ तम्प्रत्नथायँ वेनश्चोदयध्येदेवास आन इळाभिर्विश्वेभिस्सोम्यम्मध्वो
मासश्चर्षणीधृतः ॥ ४ ॥ अग्न इन्द्र वरुण मित्र देवाश्शर्द्धः प्रयन्त मारुतोत

विष्णो ॥ उभा नासत्या रुद्रो अधग्नाःपूषाभगस्सरस्वती जुषन्त ॥ ५ ॥ इन्द्राग्नी
मित्रावरुणादितिꣳ स्वः पृथिवीन्द्यामम्मरुतःपर्वताँ२अपः ॥ हुवे विष्णुम्पूषणम्ब्रह्म
णस्पतिम्भगन्नुशꣳ सꣳ सवितारमूतये ॥ ६ ॥ अस्मे रुद्रा मेहना पर्वतासो वृत्र
हत्ये भरहूतौ सजोषाः ॥ यश्शꣳसते स्तुवते धायि पज्र इन्द्र ज्येष्ठा अस्माँ२अ
वन्तु देवाः ॥७॥ अर्वाञ्चो अद्या भवता यजत्रा आवो हार्दिभयमानोव्ययेयम् ॥
त्राध्वन्नो देवा निजुरो वृकस्य त्राध्वङ्कर्तादवपदो यजत्राः ॥ ८ ॥ विश्वे अद्य म
रुतो विश्व ऊती विश्वे भवन्त्वग्नयस्समिद्धाः ॥ विश्वेनो देवा अवसागमन्तु वि
श्वमस्तुद्रविणँव्वाजो अस्मे ॥ ९ ॥ विश्वे देवाः शृणुतेमꣳ हवम्मेये अन्तरिक्षे य
उपद्यविष्ठ ॥ ये अग्निजिह्वा उतवा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ॥१०॥
देवेभ्योहि प्रथमँय्यज्ञियेभ्योऽमृतत्वꣳ सुवसि भागमुत्तमम् ॥ आदिद्दामानꣳ स

वितर्व्यूर्णुषे नूचीनाजीविता मानुषेभ्यः ॥ ११ ॥ ४

प्रवायुमच्छा बृहती मनीषा बृहद्रयिंविश्ववारꣳ रथप्राम् ॥ द्युत द्यामानियु
तः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥ १ ॥ इन्द्रवायू इमे सुताउपप्रयो
भिरागतम् ॥ इन्दवोवा मुशन्तिहि ॥ २ ॥ मित्रꣳ हुवे पूतदक्षँवरुणञ्चरिशाद
सम् ॥ धियङ्घृताचीꣳ साधन्ता ॥ ३ ॥ दस्रा युवाकवस्सुता नासत्या वृक्तबर्हि
षः ॥ आयातꣳ रुद्रवर्तनी ॥ तम्प्रत्नथायँवेनश्चोदयत् ॥ ४ ॥ विदद्यदी सरमा
रुग्णमद्रेर्महि पाथः पूर्व्यꣳ सध्र्यक्कः ॥ अग्रन्नयत्सुपद्यक्षराणा मच्छारवम्प्रथमा
जानतीगात् ॥ ५ ॥ नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुर एतारमग्नेः ॥ एमे
नमवृधन्नमृता अमर्त्यँवैश्वानरङ्क्षैत्रजित्याय देवाः ॥ ६ ॥ उग्रा विघनिना मृ
धइन्द्राग्नी हवामहे ॥ तानो मृळात ईदृशे ॥ ७ ॥ उपास्मै गायता नरः पवमा

नायेन्द्वे ॥ अभिदेवाँ२इयंक्षते ॥ ८ ॥ ये त्वाहिहत्ये मघवन्नवर्धन्ये शाम्बरे ह
रिवो ये गइष्टौ ॥ येत्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमꣳ सगणो मरुद्भिः
॥ ९ ॥ जनिष्ठा उग्रस्सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ॥ अवर्धन्निन्द्रं
म्मरुतश्चिदत्र माता यद्वीरन्दधनद्धनिष्ठा ॥ १० ॥ आतूनं इन्द्र वृत्रहन्नस्माकम
र्धमागहि ॥ महान्महीभिरूतिभिः ॥ ११ ॥ त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि
स्पृधः ॥ अशस्तिहा जनिता विश्वतूरसि त्वन्तूर्य तरुष्यतः ॥ १२ ॥ अनुते शु
ष्मन्तुरयन्तमीयतुःक्षोणी शिशुन्नमातरा ॥ विश्वास्ते स्पृधः श्नथयन्त मन्यवेवृत्रँ
य्यदिन्द्र तूर्वसि ॥ १३ ॥ यज्ञो देवानाम्प्रत्येति सुम्नमादित्यासो भवता मृळय
न्तः ॥ आवोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवो वित्तरासत् ॥१४॥ अदब्धे
भिस्सवितःपायुभिष्ट्वꣳ शिवेभिरद्य परिपाहिनो गयम् ॥ हिरण्यजिह्वस्सुविताय

नव्यसे रक्षा माकिर्नो अघशꣳ सईशत ॥ १५ ॥ ५

प्रवीरया शुचयो दद्रिरेवामध्वर्युभिर्मधुमन्तस्सुतासः ॥ वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय ॥ ॥ १ ॥ गाव उपावतावतम्मही यज्ञस्य रप्सुदा ॥ उभा कर्णा हिरण्यया ॥२॥ काव्ययोराजानेषु क्रत्वा दक्षस्य दुरोणे ॥ रिशादसा सधस्थआ ॥ ३ ॥ दैव्या अध्वर्यू आगतꣳ रथेन सूर्यत्वचा ॥ मध्वा यज्ञꣳ समञ्जाथे ॥ तम्प्रत्नथायँव्वेनश्चोदयत् ॥४॥ तिरश्चीनो विततो रश्मिरेषा मधःस्विदासी३दुपरिस्विदासी३त्॥ रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥ ५ ॥ आरोदसी अपृणदा स्वर्महज्जातँयदेनमपसो अधारयन् ॥ सोअध्वराय परिणीयते कविरत्योन वाजसातये चनोहितः ॥ ६ ॥ उक्थेभिर्वृत्रहन्तमा याया मन्दाना चिदा गिरा ॥ आङ्गूषैराविवासतः ॥ ७ ॥ उपन

स्सूनवो गिरःशृण्वन्त्वमृतस्यये ॥ सुमृळीका भवन्तुनः ॥ ८ ॥ ब्रह्माणि मेमत
यश्शꣳ सुतासःशुष्म इयर्ति प्रभृतो मेअद्रिः ॥ आशासते प्रतिहर्यन्त्युक्थेमाहरी
वहतस्ता नोअच्छ ॥ ९ ॥ अनुत्तमाते मघवन्न किर्नुनत्वा वाँ२अस्ति देवतावि
दानः ॥ नजायमानो नशतेन जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ॥ १० ॥
तदिदास भुवनेषु ज्येष्ठँय्यतो जज्ञउग्रस्त्वेष नृम्णः ॥ सद्यो जज्ञानो निरिणाति
शत्रूननुयँविश्वे मदन्त्यूमाः ॥११॥ इमा उत्वा पुरूवसो गिरो वर्धन्तु याममं ॥
पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत ॥ १२ ॥ यस्यायँविश्व आर्यो
दासःशेवधिपा अरिः ॥ तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यतेरयिः ॥१३॥
अयꣳ सहस्रमृषिभिस्सहस्कृतस्समुद्र इव पप्रथे ॥ सत्यस्सो अस्य महिमा गृणे
शवो यज्ञेषु विप्रराज्ये ॥ १४ ॥ अदब्धेभिस्सवितः पायुभिष्ट्वꣳ शिवेभिरद्यपरि

पाहिनो गर्यम् ॥ हिरण्यजिह्वस्सुविताय नव्यसे रक्षामाकिर्नो अघशꣳ सईश
त ॥ १५ ॥ ६ ॥ हरिःॐ ॥

अस्याजरासस्सप्तदश ॥ १७ ॥ आपश्चिद्द्वादश ॥१२॥ विभ्राट्चतुर्दश ॥१४॥ प्रवावृजएकादश ॥ ११ ॥ प्रवायुम्पञ्चदश ॥ १५ ॥ प्रवीरयेतिच ॥ १५ ॥ षडनुवाकेषुचतुरशीतिः ॥ ८४ ॥ इतिशुक्लयजुर्वेदकाण्वसँहितापाठेद्वात्रिंशतिमोऽध्यायः ॥ हरिःॐ ॥

हरिःॐ ॥ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनश्शिवसङ्कल्पमस्तु ॥ १ ॥ पितुन्नुस्तोषम्महो धर्माणन्तविषीम् ॥ यस्य त्रितो व्योजसा वृत्राँव्विपर्वमर्दयत् ॥२॥ अन्विदनुमते त्वम्मन्यासैशञ्च नस्कृधि ॥ क्रत्वे दक्षाय नोहिनु प्रणआयूꣳषितारिषः ॥ ३ ॥ सिनीवा

लि पृथुष्टुके यादेवानामसि स्वसा ॥ जुषस्व हव्यमाहुतम्प्रजान्देविदिदिड्ढिनः
॥ ४ ॥ पञ्च नद्यस्सरस्वतीमपियन्ति सस्रोतसः ॥ सरस्वती तुपञ्चधासो देशेऽ
भवत्सरित् ॥ ५ ॥ त्वमग्ने प्रथमो अङ्गिराऋषिर्देवोदेवानामभवश्शिवस्सखा॥तव
व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ ६ ॥ त्वन्नोअग्ने तवदेव
पायुभिर्मघोनो रक्षतन्वश्च वन्द्य ॥ त्राता तोकस्य तनये गवामस्यनिमेषꣳ रक्ष
माणस्तव व्रते ॥ ७ ॥ उत्तानायामवभरा चिकित्वान्त्सद्यःप्रवीतावृषणञ्जजान ॥
अरुषस्तूपोरुशदस्य पाज इळायास्पुत्रो वयुनेऽजनिष्ट ॥ ८ ॥ इळायास्त्वा पदेव
यन्नाभा पृथिव्या अधि ॥ जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥ ९ ॥ प्रमन्म
हेशवसानाय शूषमाङ्गूषङ्गिर्वणसे अङ्गिरस्वत् ॥ सुवृक्तिभिस्तुवत ऋग्मियाया
र्चामार्कन्नरे विश्रुताय ॥ १० ॥ प्रवो महे महिनमो भरध्वमाङ्गूष्यꣳ शवसाना

यसाम ॥ येनानःपूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसोगा अविन्दन् ॥ ११ ॥ इ
च्छान्तित्वा सोम्यासस्सखायस्सुन्वन्ति सोमन्दधति प्रयाᳬसि ॥ तितिक्षन्ते अ
भिशस्तिञ्जनानामिन्द्र त्वदा कश्चन हिप्रकेतः ॥ १२ ॥ नते दूरे परमा
चिद्रजाᳬस्या तु प्रयाहि हरिवो हरिभ्याम् ॥ स्थिराय वृष्णे सवना
कृते मा युक्ता ग्रावाणस्समिधाने अग्नौ ॥ १३ ॥ अषाह्ळँय्युत्सु
पृतना सुपप्रिᳬ स्वर्षामप्साँव्वृजनस्य गोपाम् ॥ भरेषुजाᳬ सुक्षितिᳬ सुश्र
वसञ्जयन्तन्त्वामनुमदेम सोम ॥ १४ ॥ सोमो धेनुᳬ सोमो अर्वन्तमाशुᳬ
सोमो वीरङ्कर्मण्यन्ददाति ॥ सादन्य्यँव्विदथ्यᳬ सभेयम्पितृश्रवणँय्योददाश
दस्मै ॥ १५ ॥ त्वमिमा ओषधीस्सोम विश्वास्त्वमपो अजनयस्त्वङ्गाः ॥ त्वमात
तन्थोर्वन्तरिक्षन्त्वञ्ज्योतिषा वितमो ववर्थ ॥ १६ ॥ देवेन नोमनसा देवसोम

रायो भागꣳ सहसावन्नभियुध्य ॥ मात्वातनदीशिषे वीर्यस्योभयेभ्यःप्रचिकित्सा
गइष्टौ ॥ १७ ॥ अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् ॥
हिरण्याक्षस्सविता देव आगाद्दधद्रत्नादाशुषेवार्याणि॥१८॥हिरण्यपाणिस्सविता
विचर्षणिरुभे द्यावापृथिवी अन्तरीयते ॥ अपामीवाम्बाधते वेतिसूर्यमभि
कृष्णेन रजसा द्यामृणोति ॥ १९ ॥ हिरण्यहस्तो असुरस्सुनीथस्सुमृळीकस्स्ववा
यात्वर्वाङ् ॥ अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रति दोषङ्गृणानः ॥२०॥ येते
पन्थास्सवितःपूर्व्यासोऽरेणवस्सुकृता अन्तरिक्षे ॥ तेभिर्नोअद्यपथिभिस्सुगेभीरक्षा
चनो अधिच ब्रूहि देव ॥ २१ ॥ उभा पिबतमश्विनो भानश्शर्म यच्छतम् ॥ अ
विद्रियाभिरूतिभिः ॥ २२ ॥ अप्नस्वतीमश्विना वाचमस्मे कृतन्नो दस्रा वृषणा
मनीषाम् ॥ अद्यूत्येऽवसेनिह्वये वाँव्वृधे चनो भवतँव्वाजसातौ ॥ २३ ॥ द्युभि

रक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः ॥ तन्नो मित्रो वरुणो माम
हन्तामदितिस्सिन्धुःपृथिवीउतद्यौः ॥ २४ ॥ आकृष्णेन रजसा वर्तमानो निवेश
यन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसविता रथेना देवोयातिभुवनानिपश्यन् ॥२५॥१
आरात्रि पार्थिवꣳ रजः पितुरप्रायिधामभिः ॥ दिवस्सदाꣳसि बृहती विति
ष्ठस आत्वेषँव्वर्तते तमः ॥ १ ॥ उषस्तच्चित्रमाभरास्मभ्यँव्वाजिनीवति ॥ येन
तोकञ्च तनयञ्च धामहे ॥ २ ॥ प्रातर्जितम्भगमुग्रꣳ हुवेम वयम्पुत्रमदितेर्यो
विधर्ता ॥ आध्रश्चिद्यम्मन्यमानस्तुरश्चिद्राजा चिद्यम्भगम्भक्षीत्याह ॥ ३ ॥ पूष
न्तवव्रते वयन्नरिष्येम कदाचन ॥ स्तोतारस्त इहस्मसि ॥ ४ ॥ पथस्पथःपरि
पतिंव्वचस्या कामेन कृतो अभ्यानळर्कम् ॥ सनो रासच्छुरुधश्चन्द्राग्राधियन्धिय
ꣳसीषधाति प्रपूषा ॥ ५ ॥ त्रीणिपदा विचक्रमे विष्णुर्गोपा अदाभ्यः ॥ अतो

धर्माणि धारयन् ॥ ६ ॥ तद्विप्रासो विपन्यवो जागृवाꣳ सस्समिन्धते ॥ विष्णो
र्यत्परमम्पदम् ॥ ७ ॥ घृतवती भुवनानामभिश्रियोर्वी पृथ्वीमधुदुघे सुपेशसा ॥
द्यावापृथिवीवरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ ८ ॥ ये नस्सप
त्नाअपते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् ॥ वसवो रुद्रा आदित्या उपरि
स्पृशम्मोग्रञ्चेत्तारमधिराजमक्रन् ॥९ ॥ आनासत्यात्रिभिरेकादशैरिहदेवेभिर्यात
म्मधुपेयमश्विना ॥ प्रायुस्तारिष्टन्नीरपाꣳसि मृक्षतꣳ सेधतन्द्वेषो भवतꣳ सचा
भुवा ॥ १० ॥ एषवस्तोमो मरुत इयङ्गीर्मान्दार्यस्य मान्यस्य कारोः ॥ एषायो
सीष्ट तन्वे वयाँ ꣳविद्यामेषँꣳवृजनञ्जीरदानुम् ॥ ११ ॥ सहस्तोमास्सहछन्दसआ
वृतस्सहप्रमा ऋषयस्सप्त दैव्याः॥पूर्वेषाम्पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो
नरश्मीन् ॥ १२ ॥ आयुष्यꣳवर्चस्यꣳ रायस्पोषमौद्भिदम् ॥ इदꣳ हिरण्यँꣳवर्चस्व

जैवायाविशतादुमाम्॥१३॥नतद्रक्षांꣳसिनपिशाचास्तरन्तिदेवानामोजः प्रथमजꣳ
ह्येतत् ॥ योबिभर्तिदाक्षायणꣳ हिरण्यꣳ सदेवेषु कृणुते दीर्घमायुस्समनु
ष्येषु कृणुते दीर्घमायुः ॥ १४ ॥ यदाबध्नन्दाक्षायणाहिरण्यꣳ शतानीकाय सुम
नस्यमानाः ॥ तन्म आबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥१५॥ उत
नोऽहिर्बुध्न्यःशृणोत्वज एकपात्पृथिवी समुद्रः ॥ विश्वे देवा ऋतावृधोहुवानास्तु
तामन्त्राः कविशस्ता अवन्तु ॥ १६ ॥ इमा गिर आदित्येभ्यो घृतस्नूस्सनाद्राज
भ्यो जुह्वाजुहोमि ॥ शृणोतु मित्रो अर्यमा भगोनस्तुविजातो वरुणो दक्षो अꣳ
शः ॥ १७ ॥ सप्त ऋषयः प्रतिहिताश्शरीरे सप्तरक्षन्ति सदमप्रमादम् ॥ सप्ता
पस्स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौच देवौ ॥ १८ ॥ उत्तिष्ठ
ब्रह्मणस्पते देवयन्तस्त्वेमहे॥उपप्रयन्तुमरुतस्सुदानव इन्द्रप्राशूर्भवा सचा॥१९॥

प्रनूनम्ब्रह्मणस्पतिर्मन्त्रंवदत्युक्थ्यम् ॥ यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकाँसि चक्रिरे ॥ २० ॥ ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधितनयञ्च जिन्व ॥ विश्वन्तद्भद्रँय्यदवन्ति देवा बृहद्वदेम विदथेसुवीराः ॥ यइमाविश्वा विश्वकर्मायोनःपिताऽन्नपतेऽन्नस्य नोदेहि ॥ २१ ॥ २ हरिःॐ

यज्जाग्रतःपञ्चविंशतिः ॥ २५ ॥ आराऽयेकविंशतिः ॥ २१ ॥ द्वयोरनुवाकयोः षट्चत्वारिंशत् ॥ ४६ ॥ प्राणायवाजस्यहोतायज्जाग्रतश्चषट्चत्वारिंशत् ॥ इतिशुक्लयजुर्वेदकाण्वसँहितापाठेत्रयस्त्रिंशतिमोऽध्यायः ॥ हरिःॐ ॥

हरिः ॐ॥देव सवितः प्रसुव यज्ञम्प्रसुव यज्ञपतिम्भगाय ॥ दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नस्स्वदतु ॥ १ ॥ तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ २ ॥ विश्वानि देव सवि

न्दुरितानिपरा सुव ॥ यद्भद्रन्तन्न आसुव ॥ ३ ॥ विभक्तारँ हवामहे वसोश्चि
त्रस्य राधसः ॥ सवितारन्नृचक्षसम् ॥ ४ ॥ ब्रह्मणे ब्राह्मणङ्क्षत्राय राजन्यम्मरु
द्भ्यो वैश्यन्तपसेशूद्रन्तमसे तस्करन्नारकाय वीरहणम् ॥ पाप्मने क्लीबमाक्रया
या अयोगूङ्कामाय पुँश्चलूमतिक्रुष्टाय मागधम् ॥ ५ ॥ नृत्ताय सूतङ्गीताय शै
लूषन्धर्माय सभाचरन्नरिष्ठायै भीमलम् ॥ नर्माय रेभँ हसाय कारिमानन्दाय
स्त्रीषखम्प्रमदे कुमारी पुत्रम्मेधायै रथकारन्धैर्याय तक्षाणम् ॥ ६ ॥ तपसे कौ
लालम्मायायै कर्मारँ रूपाय मणिकारँ शुभे वपँ शरव्यायाइषुकारँ हेत्यै
धनुष्कारम् ॥ कर्मणेज्याकारान्दिष्टाय रज्जुसर्जम्मृत्यवे मृगयुमन्तकाय श्वनिन
म् ॥ ७ ॥ नदीभ्यः पौञ्जिष्टमृक्षीकाभ्यो नैषादम्पुरुषव्याघ्रायदुर्मदङ्गन्धर्वाप्सरो
भ्यो व्रात्यम् ॥ प्रयुग्भ्य उन्मत्तँ सर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्यता

याअक्षितवम्पिशाचेभ्यो बिदलकारींय्यातुधानेभ्यःकण्टकीकारीम् ॥ ८ ॥ १

सन्धये जारङ्गेहायोपपतिमार्त्यै परिवित्तन्निर्ऋत्यै परिविविदानमराध्याएदिधिषुः पतिन्निष्कृत्यै पेशस्कारीꣳ सञ्ज्ञानाय स्मरकारीम् ॥ प्रकामोद्यायोपसदँव्वर्णायानुरुधम्बलायो पदाम्॥१॥उत्सादेभ्यःकुब्जम्प्रमुदे वामनन्द्वार्भ्यस्स्रामꣳ स्वप्नायान्धमधर्माय बधिरम्पवित्रायाभिषजम् ॥ प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षायां अभिप्रश्निनम्मर्यादायै प्रश्नविवाकम् ॥२॥ अर्मेभ्यो हस्तिपञ्जवायाश्वपम्पुष्ट्यै गोपालँव्वीर्यायाविपालन्तेजसेऽजपालमिरायै कीनाशम् ॥ कीलालाय सुराकारम्भद्राय गृहपꣳ श्रेयसे वित्तधमाध्यक्षायानुक्षत्तारम् ॥३॥ भायैदार्वाहारम्प्रभायाअग्न्येधम्ब्रध्नस्यविष्टपाय।भिषेक्तारँव्वर्षिष्ठायनाकाय परिवेष्टारम् ॥ देवलोकाय पेशितारम्मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्य उपसेक्तार

र्व ऋत्यै वधायोपमन्थितारम्मेधाय वासः पल्पूलीम्प्रकामाय रजयित्रीम् ॥४॥
ऋतये स्तेनहृदयँ᳖वैरहत्याय पिशुनँ᳖विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारम्ब
ळायानु चरम्भूम्ने परिष्कन्दम् ॥ प्रियाय प्रियवादिनमरिष्ट्या अश्वसादꣳ स्व
र्गाय लोकाय भागदुघँ᳖वर्षिष्ठाय नाकाय परिवेष्टारम् ॥ ५ ॥ २

मन्यवेऽ यस्तापङ्क्रोधाय निसरँय्योगाय योक्तारꣳ शोकायाभिसर्त्तारङ्क्षेमा
य विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनम् ॥ वपुषे मानस्कृतꣳ शीलायाञ्जनीकारी
न्निर्ऋत्यैकोशकारीँय्यमायासूम् ॥ १ ॥ यमाय यमसूमथर्वभ्योऽवतोकाꣳ सँ᳖व
त्सराय पर्यायिणीम्परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्क
द्वरीम् ॥ वत्सराय विजर्जराꣳ सँ᳖वत्सराय पलिक्नीमृभुभ्योऽजिनसन्धꣳ साध्येभ्य
श्चर्मम्नम् ॥ २ ॥ सरोभ्यो धैवरमुपस्थावराभ्यो दाशँ᳖वैशन्ताभ्यो बैन्दन्नड्वला

भ्यः शौष्कलम् ॥ पाराय मार्गारमवाराय कैवर्त्तन्तीर्थेभ्य आन्दं विषमेभ्यो मैनालम्॥
स्वनेभ्यः पर्णकङ्गुहाभ्यः किरातꣳ सानुभ्यो जम्भकम्पर्वतेभ्यः किम्पूरुषम् ॥३॥
बीभत्सायै पौल्कसँवर्णाय हिरण्यकारन्तुलायै वाणिजम्पश्चादोषाय ग्लाविनँ
विश्वेभ्यो भूतेभ्यः सिध्मलम् ॥ भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनँ
व्यृद्ध्या अपगल्भꣳ सꣳशराय प्रच्छिदम् ॥ ४ ॥ अक्षराजाय कितवङ्कृताया आदि
नवदर्शन्त्रेतायै कल्पिनन्द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुम्मृत्यवे गोव्य
च्छमन्तकाय गोघातम् ॥ क्षुधे यो गां विकृन्तन्तम्भिक्षमाण उपतिष्ठति दुष्कृता
य चरकाचार्यम्पाप्मने सैलगम् ॥ ५ ॥ ३

प्रतिश्रुत्काया अर्त्तनङ्घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳ शब्दा
याळम्बराघातम् ॥ महसे वीणावादङ्क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मँव

नाय वनपमन्यतोऽरण्यायदावपम् ॥ १ ॥ नर्माय पुंश्चलूँ हसायकारीँय्यादसे शाबल्याङ्ग्रामण्यङ्गणकमभि क्रोशकन्तान्महसे ॥ वीणावादम्पाणिघ्नन्तूणवध्म न्तान्नृत्तायानन्दाय तलवम् ॥ २ ॥ अग्नयेऽपीवानम्पृथिव्यै पीठसर्पिणँव्वायवे चाण्डालमन्तरिक्षायवꣳशनर्तिनन्दिवेखलतिꣳ सूर्याय हर्यक्षम् ॥ नक्षत्रेभ्यः कि मिरञ्चन्द्रमसे किलासमह्ने शुक्लम्पिङ्गाक्षꣳ रात्र्यै कृष्णम्पिङ्गाक्षम् ॥ ३ ॥ अथै तानष्टौ विरूपानालभतेति शुक्लञ्चाति कृष्णञ्चाति दीर्घञ्चाति ह्रस्वञ्च॥ अति स्थूलञ्चाति कृशञ्चाति कुल्वञ्चाति लोमशञ्चाशूद्रा अब्राह्मणास्ते प्राजापत्याः॥ मागधःपुंश्चलीक्लीबःकितवोऽशूद्राअब्राह्मणास्ते प्राजापत्याः ॥४॥ ४ ॥ हरिःॐ

देवसवितरष्ट ॥ ८ ॥ सन्धयेजारम्पञ्च ॥५॥ मन्यवेच ॥ ५ ॥ प्रातिश्रुत्का यै चतस्रः ॥ ४ ॥ चतुरनुवाकेषु द्वाविंशतिः ॥ २२ ॥ इति शुक्लयजुर्वेदकाण्व

सांहितापाठे चतुस्त्रिंशतिमोऽध्यायः ॥ हरिःॐ ॥

हरिःॐ ॥ सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात् ॥ सभूमिँ सर्वतस्पृत्वा
त्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष एवेदँ सर्वय्यद्भूतय्यच्च भाव्यम् ॥ उतामृत
त्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमातो ज्यायाँश्चपूरुषः ॥
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पा
दोऽस्येहाभवत्पुनः ॥ ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥ ४ ॥ ततो वि
राळजायत विराजो अधि पूरुषः ॥ सजातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥
तस्माद्यज्ञात्सर्वहुतस्सम्भृतम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे वायव्यानारण्या ग्रा
म्याश्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुतऋचस्सामानि जज्ञिरे ॥ छन्दाँसि जज्ञिरे
तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मादश्वा अजायन्त येके चोभयादतः ॥

गावोह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥ तँय्यज्ञम्बर्हिषि प्रौक्षन्पुरुष
ञ्जातमग्रतः॥ तेन देवा अयजन्त साध्या ऋषयश्चये ॥ ९ ॥ यत्पुरुषँव्व्यदधुः क
तिधा व्व्यकल्पयन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमूरू पादा उच्येते ॥ १० ॥ ब्रा
ह्मणोऽस्य मुखमासीद्बाहूराजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्याँ शूद्रोअ
जायत ॥ ११ ॥ चन्द्रमामनसो जातश्चक्षोस्सूर्यो अजायत ॥ श्रोत्राद्वायुश्च प्राण
श्चमुखादग्निरजायत ॥ १२ ॥ नाभ्या आसीदन्तरिक्षँ शीर्ष्णो द्यौस्समवर्तत ॥
पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२अकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषा देवा
यज्ञमतन्वत॥ वसन्तोऽस्यासीदाज्यङ्ग्रीष्म इध्मश्शरद्धविः ॥ १४ ॥ सप्तास्यास
न्परिधयस्त्रिस्सप्त समिधः कृताः ॥ देवा यद्यज्ञन्तन्वाना अबध्नन्पुरुषम्पशुम् ॥ १५ ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ॥ तेह नाकम्महिमान

स्सचन्त यत्र पूर्वे साध्यास्सन्ति देवाः ॥ १६ ॥ १

अद्भ्यस्सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणस्समवर्तताग्रे ॥ तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १ ॥ वेदाहमेतम्पुरुषम्महान्त मादित्यवर्णन्तमसःपरस्तात् ॥ तमेवविदित्वाति मृत्युमेति नान्यःपन्था विद्य तेऽयनाय ॥ २ ॥ प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ॥ तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन्हतस्थुर्भुवनानि विश्वा ॥ ३ ॥ यो देवेभ्य आतपति यो देवानाम्पुरोहितः ॥ पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ ४ ॥ रुचम्ब्राह्मञ्जनयन्तो देवा अग्रे तदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ ५ ॥ श्रीश्चते लक्ष्मीश्च पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्म इषाण सर्वलोकम्म

इषाण ॥ ६ ॥ २ ॥

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ॥ तदेव शुक्रन्तद्ब्रह्म तदापस्तत्प्रजापतिः ॥ १ ॥ सर्वेनिमेषा जज्ञिरे विद्युतः पुरुषादधि ॥ नैनमूर्ध्वन्नतिर्यञ्चन्न मध्ये परिजग्रभत् ॥ २ ॥ नतस्य प्रतिमा अस्ति यस्यनाम महद्यशः ॥ हिरण्यगर्भ इत्येषः॥३॥एषोहदेवः प्रदिशोऽनु सर्वाः पूर्वोह जातस्सउगर्भे अन्तः ॥ स एव जातस्सजनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतो मुखः ॥ यस्मान्नजातइत्येषः॥४॥वेनस्तत्पश्यन्निहितं तद्गुहा सद्यत्र विश्वम्भवत्येकनीळम् ॥ तस्मिन्निदꣳ सञ्चविचैति सर्वꣳ सओतःप्रोतश्च विभूःप्रजासु ॥ ५ ॥ प्रतद्वोचेदमृतन्नु विद्वान्गन्धर्वो धाम विभृतङ्गुहा सत् ॥ त्रीणि पदानि निहितागुहास्ययस्तानि वेद सपितुः पितासत् ॥ ६ ॥ सनो बन्धुर्जनिता सविधाता धामानि वेद भुव

नानि विश्वा ॥ यत्रदेवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥ ७ ॥ परी
त्यभूतानि परीत्य लोकान्परीत्यसर्वाःप्रदिशोदिशश्च ॥ उपस्थाय प्रथमजा मृत
स्यात्मनात्मानमभिसँव्विवेश ॥ ८ ॥ परिद्यावापृथिवी सद्यइत्वा परिलोकान्पारि
दिशःपरिस्वः ॥ ऋतस्य तन्तुँव्विततँव्विचृत्य तदपश्यत्तदभवत्तदासीत् ॥ ९ ॥
सदसस्पति मद्भुतम्प्रियमिन्द्रस्य काम्यम् ॥ सनिम्मेधामयासिषꣳ स्वाहा ॥१०॥
याम्मेधान्देवगणाः पितरश्चोपासते ॥ तयामामद्य मेधयाग्ने मेधाविनङ्कुरु स्वा
हा ॥ ११ ॥ इदम्मे ब्रह्मच क्षत्रञ्चोभे श्रियमश्नुताम् ॥ मयि देवा दधतुश्रिय
मुत्तमान्तस्यैते स्वाहा ॥ १२ ॥ ३

अपेतो यन्तु पणयोऽसुम्ना देवपीयवः ॥ अस्य लोकस्सुतावतः ॥ १ ॥ द्युभि
रहोभिरक्तुभिर्व्यक्तँय्यमो ददात्ववसानमस्मै ॥ सविता ते शरीरेभ्यः पृथिव्याँ

ह्णोकमिच्छतु ॥ तस्मै युज्यन्तामुस्त्रियाः ॥ २ ॥ वायुःपुनातु सविता पुना
त्वग्नेर्भ्राजसा सूर्यस्य वर्चसा ॥ विमुच्यन्तामुस्त्रियाः ॥ ३ ॥ अश्वत्थेवो नि
षदनम्पर्णेवो वसतिष्कृता ॥ गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ४ ॥
सविता ते शरीराणि मातुरुपस्थ आवपतु ॥ तस्मै पृथिवि शम्भव ॥ प्रजा
पतौ त्वा देवतायामुपोदके लोके निदधाम्यसौ ॥ ५ ॥ परम्मृत्यो अनुपरे
हि पन्थाँय्यस्तेऽअन्य इतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि मानः
प्रजाꣳ रीरिषो मोत वीरान् ॥ ६ ॥ शँव्वातश्शꣳहिते घृणिश्शन्ते भवन्त्विष्ट
काः ॥ शन्ते भवन्त्वग्नयः पार्थिवासो मात्वाभि शूशुचन् ॥ ७ ॥ कल्पन्ता
न्ते दिशस्तुभ्यमापःशिवतमास्तुभ्यम्भवन्तु सिन्धवः ॥ अन्तरिक्षꣳ शिवन्तुभ्य
ङ्कल्पन्तान्ते दिशस्सर्वाः ॥ ८ ॥ अश्मन्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतर

तासखायः ॥ अग्ने जहीमोऽशिवाये असंञ्छिवान्वयमुत्तरेमाभिवाजान् ॥९॥अपा
घमप किल्बिषमपकृत्यामपो रपः॥अपा मार्ग त्वमस्मदप दुःष्वप्न्यँ सुव॥१०॥
सुमित्रियान आप ओषधयस्सन्तु दुर्मित्रियास्तस्मै सन्तु ॥ योऽस्मान्द्वेष्टि यञ्च
वयन्द्विष्मः ॥ ११ ॥ अनड्वाहमन्वारभामहे स्वस्तये ॥ सन इन्द्रइव देवेभ्यो
वह्निस्सन्तारणो भव ॥ १२ ॥ उद्वयन्तमसस्परिस्वःपश्यन्तउत्तरम् ॥ देवन्देवत्रा
सूर्यमगन्म ज्योतिरुत्तमम् ॥ १३ ॥ अग्नआयूँषि पवस आसुवोर्जमिषञ्चनः ॥
आरे बाधस्वदुच्छुनाम् ॥ १४ ॥ आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयो
निरेधि ॥ घृतम्पीत्वा मधुचारु गव्यम्पितेव पुत्रमभिरक्षतादिमान्त्स्वाहा ॥१५॥
इमञ्जीवेभ्यः परिधिन्दधामि मैषान्नु गादपरो अर्थमेतम् ॥ शतञ्जीवन्तुशरदः
पुरूचीरन्तर्मृत्युन्दधताम्पर्वतेन ॥ १६ ॥ परीमे गामनेषत पर्यग्निमहृषत ॥ देवे

स्वंकृत श्रवःकइमाँ२आदधर्षति ॥ १७ ॥ क्रव्यादमग्निम्प्रहिणोमिदूरँय्यमराज्य
ङ्गच्छतु रिप्रवाहः॥इहैवायमितरो जातवेदा देवेभ्यो हव्यँव्वहतु प्रजानन् ॥१८॥
वहवपाञ्जातवेदः पितृभ्यो यत्रै नान्वेत्थ निहितान्पराके ॥ मेदसःकुल्या उपता
न्त्स्रवन्तु सत्या एषामाशिषस्सन्तु कामास्स्वाहा ॥ १९॥ स्योनापृथिविनो भवा
नृक्षरा निवेशनी ॥ यच्छा नश्शर्म सप्रथाः ॥ अपनश्शोशुचदघम् ॥२०॥ अस्मा
त्त्वमधि जातोऽसि त्वदयञ्जायताम्पुनः ॥ असौ स्वर्गाय लोकाय स्वाहा ॥ अप
नश्शोशुचदघम् ॥ २१ ॥ ६ ॥ हरिःॐ

सहस्रशीर्षाषोडश ॥ १६ ॥ अद्भ्यस्सम्भृतःषट् ॥ ६॥ तदेवाग्निर्द्वादश ॥१२॥
अपेतोयन्त्वेकविंशतिः ॥२१॥ चतुरनुवाकेषुपञ्चपञ्चाशत् ॥५५॥ अग्नेस्तनूरसि
सहस्रशीर्षाचपञ्चपञ्चाशत् ॥ इति शुक्लयजुर्वेद काण्वसँहितापाठेपञ्चविंशति

तमोऽध्यायः ॥ हरिः ॐ

हरिः ॐ ॥ ऋचँ॑वाचम्प्रप॑द्ये मनो॒ यजुः॒ प्रप॑द्ये॒ साम॑ प्राण॒म्प्रप॑द्ये॒ चक्षुः॒श्रोत्र॒
म्प्रप॑द्ये ॥ वागोजः॑स्स॒होजो॒ मयि॑ प्राणापा॒नौ ॥ १ ॥ यन्मे॑ छि॒द्रञ्चक्षु॑षो॒ हृद॑य
स्य॒मन॑सो॒ वाति॑तृण्ण॒म्बृह॒स्पति॑र्मे॒ तद्द॑धातु ॥ शन्नो॑भवतु॒ भुव॑नस्य॒ यस्पतिः॑ ॥२॥
भूर्भु॒वस्स्वः॑ ॥ तत्स॑वि॒तुर्वरे॑ण्य॒म्भर्गो॑दे॒वस्य॑ धीमहि ॥ धियो॒योनः॑ प्रचो॒दया॑त् ॥३॥
कया॑नश्चि॒त्र आभु॑वदू॒ती स॒दावृ॑ध॒स्सखा॑ ॥ कया॒ शचि॑ष्ठया वृ॒ता॥४॥कस्त्वा॑स॒त्यो
मदा॑ना॒म्मँ॑हिष्ठो मत्स॒दन्ध॑सः ॥ दृ॒ह्ळाचि॑ दा॒रु॒जेवसु॑ ॥ ५ ॥ अभी॒षुण॒स्सखी॑
नामवि॒ता ज॑रितॄ॒णाम् ॥ श॒तम्भ॑वास्यू॒तिभिः॑ ॥ ६ ॥ कया॒ त्वन्न॑ ऊ॒त्याभि प्रम॑
न्दसे वृषन् ॥ कया॑ स्तो॒तृभ्य॒ आभ॑र ॥ ७ ॥ इन्द्रो॒ विश्व॑स्य राजति ॥ शन्नो॑
अस्तु द्वि॒पदे॒ शञ्चतु॑ष्पदे ॥ ८ ॥ शन्नो॑ मि॒त्रश्शँ॑वरु॑ण॒श्शन्नो॑ भवत्वर्य॒मा ॥ श

न्नइन्द्रो बृहस्पतिश्शन्नो विष्णुरुरुक्रमः ॥ ९ ॥ शन्नो वातः पवताᳬशन्नस्तपतु सूर्यः ॥ शन्नः कनिक्रदद्देवः पर्जन्यो अभि वर्षतु ॥ १० ॥ अहानि शम्भवन्तु नश्शᳬरात्रिः प्रतिधीयताम् ॥ शन्न इन्द्राग्नी भवतामवोभिश्शन्न इन्द्रावरुणा रातहव्या ॥ शन्न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शँय्योः ॥ ११ ॥ शन्नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शँय्योरभिस्रवन्तुनः ॥ १२ ॥ स्योना पृथिविनो भवानृक्षरा निवेशनी ॥ यच्छानश्शर्म सप्रथाः ॥ १३ ॥ आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन ॥ महे रणाय चक्षसे ॥ १४ ॥ योवश्शिवतमो रसस्तस्य भाजयतेहनः ॥ उशतीरिव मातरः ॥ १५ ॥ तस्मा अरङ्गमामवो यस्यक्षयाय जिन्वथ ॥ आपोजनयथाचनः ॥१६॥ द्यौश्शान्तिरन्तरिक्षᳬ शान्तिः पृथिवी शान्तिरापश्शान्तिरोषधयश्शान्तिः ॥ वनस्पतयश्शान्तिश्शान्तिरेवशान्तिः ॥१७॥

दृतेदृꣳहमामित्रस्य माचक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ॥ मित्रस्याहञ्चक्षु
षासर्वाणि भूतानि समीक्षे ॥ मित्रस्य चक्षुषा समीक्षामहे ॥१८॥ दृतेदृꣳहमा ॥
ज्योक्ते सन्दृशि जीव्यासञ्ज्योक्ते सन्दृशिजीव्यासम् ॥ १९ ॥ नमस्ते हरसे शो
चिषेनमस्ते अस्त्वर्चिषे ॥ अन्याꣳस्ते अस्मत्तपन्तु हेतयःपावको अस्मभ्यꣳ शि
वोभव ॥ २० ॥ नमस्ते अस्तु विद्युते नमस्तेस्तनयित्नवे ॥ नमस्ते भगवन्नस्तु
यतस्स्वस्समीहसे ॥ २१ ॥ यतो यतस्समीहसे ततोनो अभयङ्कुरु ॥ शन्नःकुरु
प्रजाभ्योऽभयन्नः पशुभ्यः ॥ २२ ॥ सुमित्रियान आप ओषधयस्सन्तुदुर्मित्रिया
स्तस्मै सन्तु ॥ योऽस्मान्द्वेष्टियञ्च वयन्द्विष्मः ॥२३॥ तच्चक्षुर्देवहितम्पुरस्ताच्छु
क्रमुच्चरत् ॥ पश्येम शरदश्शतञ्जीवेम शरदश्शतꣳ शृणुयामशरदश्शतम् ॥२४॥
॥१॥ हरिःॐ ॥

ऋचँव्वाचमित्येकानुवाकेचतुर्विंशतिः ॥ २४ ॥ इतिशुक्लयजुर्वेदकाण्वसँहिता
पाठे षट्त्रिंशतितमोऽध्यायः ॥ हरिःॐ॥

हरिःॐ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥
आददे नारिरसि ॥ १ ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृह
तो विपश्चितः ॥ विहोत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुःपरि
ष्टुतिः ॥ २ ॥ देवी द्यावा पृथिवी मखस्य वामद्यशिरो राध्यासन्देवयजने पृ
थिव्याः ॥ मखायत्वा मखस्य त्वा शीर्ष्णे ॥ ३ ॥ देव्यो वम्रियो भूतस्य प्र
थमजा मखस्य वोऽद्य शिरो राध्यासन्देव यजने पृथिव्याः ॥ मखाय त्वा म
खस्य त्वा शीर्ष्णे ॥ ४ ॥ इयत्यग्र आसीर्मखस्य तेऽद्यशिरो राध्यासन्देवयज
ने पृथिव्याः ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ५ ॥ इन्द्रस्यौजस्थ म

खस्यं वोऽद्यशिरों राध्यासन्देवयजने पृथिव्याः ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ ६ ॥

प्रैतु ब्रह्मणस्पतिः प्रदेव्येतु सूनृता ॥ अच्छावीरन्नर्यम्पङ्क्तिराधसन्देवा यज्ञन्नयन्तुनः ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ ७ ॥

मखस्य शिरोऽसि ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ मखस्य शिरोऽसि ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ मखस्य शिरोऽसि ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे मखायं त्वा मखस्यं त्वा शीर्ष्णे मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ ८ ॥

अश्वस्य त्वा वृष्णश्शक्ना धूपयामि देवयजने पृथिव्याः ॥ मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ अश्वस्य त्वा वृष्णश्शक्ना धूपयामि देवय

जने पृथिव्याः ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ अश्वस्य त्वा वृष्णश्श
क्ना धूपयामि देवयजने पृथिव्याः ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखा
य त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य
त्वाशीर्ष्णे ॥ ९ ॥ ऋजवेत्वा साधवेत्वा सुक्षित्यैत्वा ॥ मखायत्वा मखस्यत्वा शी
र्ष्णे ॥ मखायत्वा मखस्यत्वा शीर्ष्णे॥मखायत्वा मखस्यत्वा शीर्ष्णे ॥ १० ॥ १
यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे ॥ देवस्त्वा सविता मध्वानक्तु
पृथिव्यास्सꣳ स्पृशस्पाहि ॥ अर्चिरसि शोचिरसि तपोऽसि ॥ १ ॥ अनाधृ
ष्टा पुरस्तादग्नेराधिपत्य आयुर्मेदाः पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजाम्मे
दाः ॥ सुषदापश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्मेदा आश्रुतिरुत्तरतो धातुराधि
पत्ये रायस्पोषम्मेदाः ॥ विधृतिरुपरिष्टाद्बृहस्पते राधिपत्य ओजोमेदा विश्वा

भ्यो मानाष्ट्राभ्य स्पाहिमनो रक्षांसि ॥ २ ॥ स्वाहा मरुद्भिः परिश्रीयस्व दि

वस्सꣳ स्पृशस्पाहि॥मधु मधु मधु ॥ ३ ॥ २

गर्भो देवानाम्पिता मतीनाम्पतिःप्रजानाम् ॥ सन्देवो देवेन सवित्रागतसꣳ

सूर्येण रोचते ॥ १ ॥ समग्निरग्निनागत सन्दैवेन सवित्रासꣳ सूर्येणारोचिष्ट ॥

स्वाहा समग्निस्तपसागत सन्दैव्येन सवित्रासꣳ सूर्येणारूरुचत ॥ २ ॥ धर्ता

दिवो विभाति तपसस्पृथिव्यान्धर्ता देवो देवानाममर्त्यस्तपोजाः ॥ वाचमस्मे

नियच्छ देवायुवम् ॥३॥ अपश्यङ्गोपामनिपद्यमानमाचपराच पथिभिश्चरन्तम् ॥

ससध्रीचीस्सविषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः ॥ ४ ॥ विश्वासाम्भुवाम्पते

विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पते ॥ देवश्रुत्त्वन्देवघर्म

देवो देवान्पाह्यत्रप्रावीरनु वान्देव वीतये ॥ मधु माध्वीभ्याम्मधुमाधूचीभ्याम् ॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ॥ ऊर्ध्वो अध्वरन्दिवि देवेषु धेहि ॥ ५ ॥ पिता नोऽसि पिता नो बोधि नमस्ते अस्तु मामा हिꣳसीः ॥ त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेह्यरिष्टाहꣳ सहपत्या भूयासम् ॥ ६ ॥ अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ॥ रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ॥ ७ ॥ ३ ॥ हरिःॐ ॥

देवस्य त्वा दश ॥१०॥ यमाय तिस्रः ॥ ३ ॥ गर्भोदेवानां सप्त ॥ ७ ॥ =यनुवाकेषु विंशतिः ॥ २० ॥ इति शुक्लयजुर्वेद काण्व संहितापाठे सप्तत्रिंश तितमोऽध्यायः ॥ हरिःॐ ॥

हरिःॐ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ आददेऽदित्यै रास्नासि ॥ १ ॥ इळ एह्यदित एहि सरस्वत्येहि ॥ असावेह्य

सावेह्यसावेहि ॥ २ ॥ अदित्यै रास्नासीन्द्राण्या उष्णीषः ॥ पूषासि घर्माय
दीष्व ॥ ३ ॥ अश्विभ्याम्पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्व ॥ स्वाहे
न्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ॥ ४ ॥ यस्ते स्तनश्शशयो योमयोभूर्योरत्नधा वसु
विद्यस्सुदत्रः ॥ येन विश्वा पुष्यसि वार्याणि सरस्वतितमिह धातवेऽकः ॥ उर्व
न्तरिक्षमन्वेमि ॥ ५ ॥ गायत्रञ्छन्दोऽसि त्रैष्टुभञ्छन्दोऽसि द्यावापृथिवीभ्यान्त्वा
परिगृह्णाम्यन्तरिक्षेणोपयच्छामि ॥ इन्द्राश्विना मधुनस्सारघस्य घर्मम्पात वस
वोयजतवाट् ॥ स्वाहा सूर्यस्य रश्मये वृष्टिवनये ॥ ६ ॥ १

समुद्रायत्वा वाताय स्वाहा सरिरायत्वा वाताय स्वाहा ॥ अनाधृष्यायत्वा
वाताय स्वाहा प्रतिधृष्यायत्वा वाताय स्वाहा ॥ अवस्यवेत्वा वाताय स्वाहा शि
मिदायत्वा वाताय स्वाहा ॥ १ ॥ इन्द्रायत्वा वसुमते रुद्रवते स्वाहेन्द्रायत्वादि

द्व्यवते स्वाहा ॥ इन्द्रायत्वाभिमातिघ्ने स्वाहा सवित्रेत्व ऋभुमते विभुमते वाज
वतेस्वाहा बृहस्पतयेत्वा विश्वदेव्यावते स्वाहा ॥ २ ॥ यमाय त्वाङ्गिरस्वते पितृ
मतेस्वाहा ॥ स्वाहा घर्माय स्वाहा घर्मःपित्रे ॥ ३ ॥ विश्वा आशा दक्षिणसत्स
र्वान्देवानयाळिह ॥ स्वाहा कृतस्य घर्मस्य मधोः पिबतमश्विना ॥ ४ ॥ दिवि
धाइमँय्यज्ञमिमँय्यज्ञन्दिविधाः॥स्वाहाग्नयेयज्ञियायशँय्यजुर्भ्यः।५।अश्विनाघर्मम्पा
तँ हार्द्दानमहर्दिवाभिरूतिभिः ॥ तन्त्रायिणे नमो द्यावापृथिवीभ्याम् ॥६॥ अ
पातामश्विना घर्ममनुद्यावापृथिवी अमँसाताम् ॥ इहैवरातयस्सन्तु ॥ ७ ॥ इ
षे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व द्यावापृथिवीभ्याम्पिन्व
स्व ॥ धर्मासि सुधर्मामेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रन्धारय विशन्धा
रय ॥ ८ ॥ २

स्वाहा पूष्णे शरसे स्वाहा ग्रावभ्यस्स्वाहा प्रतिरवेभ्यः ॥ स्वाहा पितृभ्य ऊर्ध्वबर्हिभ्यो घर्मपावभ्यस्स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा विश्वेभ्यो देवेभ्यः ॥१॥ स्वाहा रुद्राय रुद्रहूतये स्वाहा सञ्ज्योतिषाज्योतिः ॥ अहः केतुनाजुषताꣳ सुज्योतिज्योतिषास्वाहारात्रिःकेतुनाजुषताꣳ सुज्योतिज्योतिषास्वाहा ॥ मधु हुतमिन्द्रतमे अग्ना अश्यामते देवघर्म नमस्ते अस्तुमामा हिꣳसीः ॥ २ ॥ ३

अभीमम्महिमा दिवँव्विप्रो बभूव सप्रथाः ॥ उतश्रवसा पृथिवीꣳ सꣳसीदस्वमहाँ२असि रोचस्वदेव वीतमः ॥ विधूममग्ने अरुषम्मियेध्य सृजप्रशस्त दर्शतम् ॥ १ ॥ ४

यातें घर्म दिव्या शुग्या गायत्र्याꣳ हविर्धाने ॥ सात आप्यायतान्निष्ट्याय तान्तस्यै ते स्वाहा ॥ यातें घर्मान्तारिक्षे शुग्या त्रिष्टुभ्याम्नीध्रे ॥ सात आप्याय

तान्निष्ट्यायतान्तस्यै ते स्वाहा ॥ याते घर्मपृथिव्याꣳ शुग्याजगत्याꣳ सदस्या ॥
सात आप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहा ॥ १ ॥ क्षत्रस्यत्वा परस्पाय ब्रह्मण
स्तन्वम्पाहि ॥ विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे ॥ २ ॥ चतु
स्स्रक्तिर्नाभिर्ऋतस्य सप्रथास्सनो विश्वायुस्सप्रथास्सनस्सर्वायुस्सप्रथाः ॥ अपद्वे
षोअपह्वरोऽन्यव्रतस्य सश्चिम ॥ ३ ॥ घर्मैतत्ते पुरीषन्तेन वर्धस्वचा चप्यायस्व॥
वर्धिषीमहिच वयमाचप्यासिषीमहि ॥ ४ ॥ अचिक्रदद्वृषा हरिर्महान्मित्रो नद
र्शतः ॥ सꣳसूर्येण दिद्युतदुदधिर्निधिः ॥ ५ ॥ सुमित्रियान आपओषधयस्सन्तु
दुर्मित्रियास्तस्मै सन्तु ॥ योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः ॥ ६ ॥ उद्वयन्तमसस्प
रिस्वः पश्यन्त उत्तरम् ॥ देवन्देवत्रा सूर्यमगन्मज्योतिरुत्तमम् ॥ एधोऽस्येधिषी
महि समिदसि तेजोऽसि तेजो मयि धेहि ॥ ७ ॥ ५

यावती द्यावा पृथिवी यावच्च सप्त सिन्धवो वितस्थिरे ॥ तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं तम्मयि गृह्णाम्यक्षितम् ॥ १ ॥ मयि त्यदिन्द्रियम्बृहन्म यि दक्षो मयि क्रतुः ॥ घर्मस्त्रिशुग्विराजति विराजाज्योतिषा सह ब्रह्मणा तेज सा सह ॥ पयसो रेत आभृतन्तस्य दोहमशीमह्युत्तरामुत्तराꣳ समाम् ॥ २ ॥ ६

त्विषस्सँव्वृक्क्त्वे दक्षस्य ते सुषुम्णस्य ते सुषुम्णाग्निहुतः ॥ इन्द्र पीतस्य प्रजापति भक्षितस्य मधुमत उपहूत उपहूतस्य भक्षयामि ॥ १ ॥ ७ ॥ हरिःॐ

देवस्य त्वा षट् ॥ ६ ॥ समुद्रायत्वाष्ट ॥ ८ ॥ स्वाहापूष्णेद्वे ॥ २ ॥ अ भीममेका ॥ १ ॥ याते सप्त ॥ ७ ॥ यावती द्वे ॥ २ ॥ त्विषस्सँव्वृगेका ॥ १ ॥ सप्तानुवाकेषु सप्तविंशतिः ॥ २७ ॥ इति शुक्लयजुर्वेद काण्व संहितापाठे अष्टा त्रिंशोऽध्यायः ॥ हरिःॐ ॥

हरिःॐ ॥ स्वाहा प्राणेभ्यस्साधिपतिकेभ्यः पृथिव्यै स्वाहाग्नये स्वाहान्तारि
क्षाय स्वाहा वायवे स्वाहा दिवे स्वाहा सूर्याय स्वाहा ॥ दिग्भ्यस्स्वाहा च
न्द्राय स्वाहा नक्षत्रेभ्यस्स्वाहाद्भ्यस्स्वाहा वरुणाय स्वाहा ॥ नाभ्यै स्वाहा पूता
यस्वाहा ॥ १ ॥ १

वाचे स्वाहा प्राणाय स्वाहा प्राणाय स्वाहा ॥ चक्षुषे स्वाहा च
क्षुषे स्वाहा श्रोत्राय स्वाहा श्रोत्राय स्वाहा ॥ १ ॥ मनसःकाममाकूतिंव्वाचस्स
त्यमशीय ॥ पशूनाँ रूपमन्नस्य रसो यशःश्रीःश्रयताम्मयिस्वाहा ॥ २ ॥ २

प्रजापतिस्साम्भ्रियमाणस्सम्राट्सम्भृतो वैश्वदेवस्सँ सन्नो घर्मःप्रवृक्तस्तेज
उद्यत आश्विनः पयस्यानीयमाने पूषा विष्यन्दमाने मारुतःक्वथन् ॥ मैत्रश्शर
सि सन्ताय्यमाने वायव्यो ह्रियमाण आग्नेयो ह्रूयमानो वाग्घुतः ॥ १ ॥ ३ ॥

सविता प्रथमेऽहन्नग्निर्द्वितीये वायुस्तृतीय आदित्यश्चतुर्थे चन्द्रमाःपञ्चम ऋतुःषष्ठे मरुतस्सप्तमे बृहस्पतिरष्टमे ॥ मित्रोनवमे वरुणो दशम इन्द्रएकादशे विश्वेदेवा द्वादशे ॥ १ ॥ ४

उग्रश्चभीमश्चध्वान्तश्चधुनिश्च ॥ सासह्वाꣳश्चाभियुग्वाचविक्षिपस्स्वाहा ॥१॥५

अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिङ्कृत्स्न हृदयेन भवँयक्ना ॥ शर्वम्मतस्नाभ्या मीशानम्मन्युना महादेवमन्तः पर्शव्ये नोग्रन्देवँव्वनिष्ठुना वसिष्ठ हनुश्शिङ्गीनि कोश्याभ्याम् ॥ १ ॥ ६

उग्रँल्लोहितेन मित्रꣳ सौव्रत्येन रुद्रन्दौर्व्रत्येनेन्द्रम्प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा ॥ भवस्य कण्ठ्यꣳ रुद्रस्यान्तःपार्श्व्यम्महादेवस्ययकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् ॥ १ ॥ ७

लोमभ्यस्स्वाहा लोमभ्यस्स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदसे स्वाहा मेदसे स्वाहा ॥ माꣳसेभ्यस्स्वाहा माꣳसेभ्यस्स्वाहा स्नावभ्यस्स्वाहा स्नावभ्यस्स्वाहास्थभ्यस्स्वाहास्थभ्यस्स्वाहा मज्जभ्यस्स्वाहा मज्जभ्यस्स्वाहा ॥ रेतसे स्वाहा पायवे स्वाहा ॥ १ ॥ ८

आयासाय स्वाहा प्रायासाय स्वाहा सँय्यासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा ॥ शुचेस्वाहा शोचते स्वाहा शोकाय स्वाहा ॥ १ ॥ तपसे स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा ॥ निष्कृत्यै स्वाहा प्रायश्चित्यै स्वाहा भेषजाय स्वाहा ॥ २ ॥ यमाय स्वाहान्तकाय स्वाहा मृत्यवेस्वाहा ॥ ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यस्स्वाहा द्यावापृथिवीभ्याꣳस्वाहा ॥ ३ ॥ ९ हरिःॐ॥

स्वाहाप्राणेभ्यएका ॥ १ ॥ वाचेद्वे ॥ २ ॥ प्रजापतिस्सम्भ्रियमाणः ॥ १ ॥ स

विता प्रथमे ॥ १ ॥ उग्रश्च ॥ १ ॥ अग्निꣳ हृदयेन ॥ १ ॥ उग्रँल्लोहितेन ॥ १ ॥
लोमभ्यस्स्वाहाचेत्येकैका ॥१॥ आयासायतिस्रः ॥३॥ नवानुवाकेषुद्वादश ॥१२॥
इतिशुक्लयजुर्वेद काण्वसँहितापाठे एकोनचत्वारिंशोऽध्यायः ॥ हरिः ॐ ॥

हरिः ॐ ॥ ईशावास्यमिदꣳ सर्वंयत्किञ्च जगत्याञ्जगत् ॥ तेन त्यक्तेन भु
ञ्जीथा मागृधःकस्यस्विद्धनम् ॥ १ ॥ कुर्वन्नेवेह कर्माणि जिजीविषे च्छतꣳ
समाः ॥ एवन्त्वयि नान्यथेतोऽस्ति न कर्म लिप्यतेनरे ॥ २ ॥ असुर्या नाम
ते लोका अन्धेन तमसा वृताः ॥ ताꣳस्ते प्रेत्याभिगच्छन्ति येके चात्महनो
जनाः ॥ ३ ॥ अनेजदेकम्मनसोजवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत् ॥ तद्धा
वतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥ तदेजति तन्नैज
ति तद्दूरे तद्वन्तिके ॥ तदन्तरस्य सर्वस्य तदुसर्वस्यास्य बाह्यतः ॥ ५ ॥ य

स्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति॥ सर्वभूतेषुचात्मानन्ततो नविजुगुप्सते॥६॥
यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ॥ तत्रकोमोहःकश्शोक एकत्वमनुप
श्यतः॥७॥सपर्यगाच्छुक्रम कायमव्रणमस्नाविरꣳ शुद्ध मपापविद्धम् ॥कविर्मनीषी
परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यस्समाभ्यः ॥ ८ ॥ अन्धन्तमः
प्रविशन्ति ये विद्यामुपासते ॥ ततो भूय इवते तमोय उविद्यायाꣳ रताः ॥ ९॥
अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया ॥ इति शुश्रुम धीराणाँय्येनस्तद्विचचक्षि
रे ॥ १० ॥ विद्याञ्चाविद्याञ्चयस्तद्वेदो भयꣳ सह ॥ अविद्यया मृत्युन्तीर्त्वा वि
द्ययामृतमश्नुते ॥ ११ ॥ अन्धन्तमःप्रविशन्ति ये सम्भूतिमुपासते ॥ ततोभूय
इवते तमोय उसम्भूत्याꣳ रताः ॥ १२ ॥ अन्यदेवा हुस्सम्भवादन्यदाहुरसम्भ
वात् ॥ इतिशुश्रुम धीराणाँय्येनस्तद्विचचक्षिरे ॥ १३ ॥ सम्भूतिञ्च विनाशञ्च

यस्तद्वेदो भयꣳ सह ॥ विनाशेन मृत्युन्तीर्त्वा सम्भूत्यामृतमश्नुते ॥ १४ ॥ हिरण्मयेन पात्रेण सत्यस्यापिहितम्मुखम् ॥ तत्त्वम्पूषन्नपावृणु सत्य धर्माय दृष्टये ॥ १५ ॥ पूषन्नेकर्षेयमसूर्य प्राजापत्य व्यूहरश्मीन्त्समूह तेजो यत्ते रूपङ्कल्याणतमन्तत्ते पश्यामि ॥ योऽसावसौपुरुषस्सोऽहमस्मि ॥ १६॥ वायुरनिलममृतमथेदम्भस्मान्तꣳ शरीरम् ॥ ओ३म्क्रतोस्मर कृतꣳ स्मरक्रतो स्मर कृतꣳ स्मर ॥ १७॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिँविधेम ॥१८॥ १ हरिःॐ॥

ईशावास्यमित्येकानुवाके अष्टादश ॥१८॥ इति शुक्लयजुर्वेद काण्वसँहिता पाठे चत्वारिंशातितमोऽध्यायः ॥ हरिःॐ ॥

॥ इतिशुक्लयजुर्वेदकाण्वसँहिता समाप्ता. ॥

इयं सँहिता वे.शा.रा.रा. सुब्रह्मण्यशास्त्री, घनपाठी, वेदशालाध्यापकः, आनन्दवन;
वे. शा. रा. रा. सुब्रह्मण्यशास्त्री, घनपाठी, वेदशालाध्यापकः, कंची; वे. शा.
रा.रा. चिदंबरशास्त्री, घनपाठी, इंजिकोल्ले; वे.शा.रा.रा.गुरुनाथभट्ट
ऐनापूर, मुरगोड; वे.शा.रा.रा. शंकरावधानी हावनूर, वेद
शालाद्वितीयाध्यापकः, आनन्दवन; वे. शा. रा. रा.
नारायणशास्त्री शाडंवीकर, संस्कृतशालाद्विती-
याध्यापकः, आनन्दवन, इत्येतैः
संस्कृता–संशोधिताच.

सा-आनन्दवन–अगड्यां "श्री शेषाचल" मुद्रणालये
यल्लो गुड्डो कुलकर्णी, एतैः मुद्रायित्वा प्रकाशिता.
शकाब्दाः १८३६. सन् 1915.
मौल्यं—रूप्यचतुष्टयम् (४–०–०).

॥इति शुक्लयजुर्वेदकाण्वसंहिता॥